ISSN - 2347-9914

# शिक्षासुरभिः

(शिक्षाशास्त्रविभागीय वार्षिक पत्रिका)

# SHIKSHA SURABHI

*Annual Magazine of Shikshasashatra Department*





## शिक्षाशास्त्रविभागः

राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)

यमूल्याङ्कनप्रत्यायनपरिषदा "ए" श्रेण्या प्रत्यायितम्)

श्रीसदाशिवपरिसरः, पुरी, ओडिशा

शिक्षासत्रम् - २०१८-१९

SHIKSHA SURABHI

शिक्षासुरभिः

SHIKSHA SURABHI

# शिक्षासुरभिः

(शिक्षाशास्त्रविभागीय वार्षिक पत्रिका)

शिक्षासत्रम् - २०१८-१९



संरक्षकः

**प्रो.हरेकृष्णमहापात्रः**

प्राचार्यः



प्रधानसम्पादकः

**प्रो.विजयपालकच्छवाहः**

विभागाध्यक्षः



सम्पादकः

**डॉ.गौराङ्गबाघः**

सहसम्पादकौ

**डॉ.जि.सूर्यप्रसादः** **डॉ.मदनकुमारझा**



शिक्षाशास्त्रविभागः

**राष्ट्रियसंस्कृतसंस्थानम्** (मानितविश्वविद्यालयः)

(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा 'ए' श्रेण्या प्रत्यायितम्)

श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# शिक्षासुरभिः (Shiksha Surabhi)

प्रकाशकः - शिक्षाशास्त्रविभागः
श्रीसदाशिवपरिसरः, पुरी (ओडिशा)

वर्षम् - २०१८





ISSN - 2347-9914

संस्करणम् - २०१८

प्रतयः - ३५०

अक्षरसंयोजनम् - डॉ.गौराङ्गबाघः
डॉ.मदनकुमारझा

मुद्रकः - अन्नपूर्णाप्रिण्टर्स
कलेजरोड, पुरी

मूल्यम् - २००/-


# सम्पादकीयम्

**शरीरमाद्यं खलु धर्म साधनम् । शिक्षाप्राप्तये आदौ शरीरं स्वस्थं भवेत् ।।**

शिक्षा व्यक्तेः विकासस्य व्यापकप्रक्रिया विद्यते । प्रक्रियेयं केवलं कौशलनिष्पादनपर्यन्तं सीमिता नास्तिअपितु इदृशी प्रक्रिया अस्ति या व्यक्तेः आन्तरिकबाह्यक्षमतानां सर्वविधविकासाय सर्वदा यतते। शिक्षासम्बद्धशिक्षणादिकार्यसम्पादनाय योग्याध्यापकनिर्माणाय च अध्यापकशिक्षायाः सम्प्रत्ययः विकसितः। विभिन्नेषु विश्वविद्यालयेषु दक्षशिक्षकनिर्माणाय शिक्षाशास्त्रविभागस्य सञ्चालनं क्रियते। तत्र संस्कृतभाषाशिक्षकनिर्माणे राष्ट्रियसंस्कृतसंस्थानस्य भूमिका अतिमहत्त्वपूर्णा भवति। अत्रापि श्रीसदाशिवपरिसरः आचत्वारिंशत्वर्षेभ्यः शिक्षाशास्त्रविभागे सततं संस्कृतशिक्षकाणां निर्माणे रतः वर्तते। संस्कृतशिक्षकःकेवलं भाषाशिक्षणे एव दक्षः स्यादिति नास्ति अपितु विविधेषु आधुनिकविषयेषु अपि तस्य दक्षता आवश्यकी। भाषायाः सम्बन्धः स्पष्टतया मनसा साकं विद्यते। भाषाविज्ञानिनः मनोविज्ञानेन सह भाषिकानुसन्धाने साम्प्रतं संलग्नाः सन्ति। अतः मनोभाषाशास्त्रमिति नवशाखा अपि अध्ययनस्य प्रादुर्भूता। भाविसंस्कृतशिक्षकाः मनोविज्ञानस्य विविधक्षेत्रेषु स्वाधिगतस्य प्राकट्यं कर्तुं शक्नुयुः एतदर्थं वर्षेऽस्मिन् विभागीयपत्रिकायां तेभ्यः अवसरः प्रदत्तः। अधिगम-बुद्धि-विकास-आकलनादीनां सन्दर्भे सुचिन्तिताः आलेखाः पत्रिकायामस्यां विद्यन्ते। अतः छात्रचिन्तनाभिव्यक्तये अवसरं यच्छन्तीयं शिक्षासुरभिः प्रसरति। विभागस्य सर्वविधकार्येषु सर्वदा मार्गदर्शनं कृतवद्भ्यः व्याकरणशास्त्रधुरन्धरेभ्यः भागवद्भूषणेभ्यः कर्त्तव्यनिष्ठेभ्यः परिसरप्रमुखेभ्यः आचार्यहरेकृष्णमहापात्रेभ्यः हार्दं कार्तज्ञ्यं प्रदर्श्यते। यतो हि तेषां सद्दिशादर्शनेन पत्रिकायाः प्रकाशनं जायमानमस्ति । शिक्षाशास्त्रविभागस्य कुशलसञ्चालकेभ्यः दर्शनशास्त्रनिष्णातेभ्यः सहजसरलसहृदयेभ्यः विभागाध्यक्षेभ्यः आचार्य

विजयपालकच्छवाह-महोदयेभ्य:अपि हार्दा: धन्यवादा: वितीर्यन्ते। विभागस्य ज्येष्ठेभ्य: प्राध्यापिकाभ्य: डॉ.निर्मलापाणिग्राही-डॉ.बी.पी.एम्.श्रीनिवास-डॉ.नीलाभतिवारी अपि च सहयोगिभ्य:, डॉ.जी.सूर्यप्रसाद-डॉ.मदनकुमारझा-डॉ.सुशान्तराय-डॉ.कौशलेशशर्मा-डॉ.जितेन्द्रकुमारशर्मा-डॉ.ओमनारायणमिश्र-डॉ. भाग्यसिंहगुर्जर- डॉ.सागरिकानन्द-डॉ.सुशान्तहोतृवर्येभ्य: अपि सहयोगाय आधमर्ण्यं ज्ञापयति संपादक:। पत्रिकाकुसुममिदम् अवश्यमेव विद्वद्भ्य: छात्रेभ्यश्च लाभकरं स्यादिति धिया प्राकाश्यमाप्नोति।

**गुणा: गणनीया: दोषा: क्षन्तव्या:**

इति।
**डॉ.गौराङ्गबाघ**
सम्पादक:

# प्राचार्यवार्ता

छात्राणां जीवनाध्वनि आचार्यस्य महत्त्वं सर्वोपरि वर्वर्ति । आचार्य: यथा तान् सदाचारं शिक्षयेत, व्युत्पत्तिम् आदधीत, ज्ञाननिधिं समेधयति तथैव पापोपतापानपाकृत्य सौशील्यसम्पत्तिमपि प्रापयति। तदुक्तं निरुक्ते (१.५.४)

**आचार्य: कस्मात्? आचार्य आचारं ग्राहयति आचिनोत्यर्थान्। आचिनोति बुद्धिमिति वा।**

गुरुशिष्ययोर्द्वयोरपि सामञ्जस्यमेव उभयोरभिवृद्धिं व्यञ्जयति। अत:-

**आचार्य: पूर्वरूपम् । अन्तेवासी उत्तररूपम् ।**
**विद्या सन्धि: । प्रवचनं सन्धानम् ।।**

इति ब्रुवाणा तैत्तिरीयोपनिषदपि तदेवतत्त्वं विशदयति। गुरुशिष्ययो: एतस्य सम्बन्धस्य संयोजिका च शिक्षैव । शिक्षाहि उभयो: सम्बन्धं यथा निबध्नाति तथैव प्रतिबध्नाति विरोधिनो बाधकानपि। प्रसङ्गेऽस्मिन् शिष्यस्य गुणगणसंवर्द्धनेन तस्य इन्द्रत्वं, दुरितव्रातविमर्दनेन च आचार्यकर्तृकम् असुरविनाशनं च प्रकाश्यते । तथाहि

**इन्द्रो ह भूत्वाऽसुरांस्ततर्त** । (अथर्व.११.०५.७)

अत: शिक्षा यथा सूपनिबद्धा, विधिबद्धा, विशुद्धा, स्वभावसिद्धा, प्रकृतेरविरुद्धा च स्यात् तदर्थमाचार्यै: कृतप्रयत्नैर्भाव्यम् । इदमेव शिक्षाशास्त्रविभागस्य प्रथमं प्रमुखं प्रकृतञ्चोद्देश्यं प्रथते ।

अवसरेऽस्मिन् आस्माकीने परिसरे शिक्षाशास्त्रविभाग: अमुमेव अभावं प्रतिपूरयितुं शिक्षासुरभि नाम्नीं शोधपत्रिकां प्रतिवर्षं प्रकाशयितुं समीहते इति मोमोत्ति मे मन: । पत्रिकासम्पादकेभ्य: सर्वेभ्य: ससदस्यसमन्वयकेभ्य: वर्द्धापनं विज्ञापयन् विरमत्येष: ।

**(प्रो. हरेकृष्णमहापात्र:)**
प्राचार्य:

# सूचीपत्र







# प्राथमिकशिक्षा मातृभाषा च

**डॉ.भाग्यसिंहगुर्जरः**

सहायकप्राध्यापकः

शिक्षा मानवजीवनाय अतिमहत्त्वपूर्णा अत्यावश्यकी च वर्तते। 'सा विद्या या विमुक्तये' इति वैदिकघोषः। शिक्षा अज्ञानात् दमनात् च मुक्तिं प्रयच्छति। आधुनिकयुगेऽपि शिक्षायाः मानवीयजीवने केन्द्रीयं स्थानं विद्यते। महात्मागान्धिमहोदयानुसारम्- 'शिक्षा चेतनायाः विकासस्य समाजस्य पुनर्गठनस्य चाधारभूतं साधनमस्ति'। शिक्षां विना जीवनं निरर्थकं सारहीनञ्च जायते। शिक्षयैव मानवेषु मानवीयगुणानां विकासः भवति। शिक्षा व्यक्तिराष्ट्रयोः उन्नतेः उत्थानस्य च प्रथमं सोपानं वर्तते । अस्याः शिक्षायाः रूपत्रयं यथा – प्राथमिकशिक्षा, माध्यमिकशिक्षा, उच्चशिक्षा चेति। प्राथमिकशिक्षायाः व्यक्तेः जीवने तदेव स्थानं वर्तते यत् मातुः भवति। प्राथमिकशिक्षा बालकस्य जीवनविकासं क्रमञ्च गतिं ददाति। बाल्यकालीनशिक्षाजीवनस्य महतत्त्वपूर्णा शिक्षेति शिक्षाशास्त्रिणामभिमतम्। बाल्यकालीनमानवावस्था सम्भावनाभिः परिपूर्णाभवति। अस्याः अवस्थायाः समुचिदिशि शारीरिक-संज्ञानात्मक-बौद्धिक-सर्जनात्मक-अभिवृत्यात्मक-सौन्दर्यबोधात्मकश्च विकासः करणीयः। एतानि लक्ष्याणि प्राप्तिहेतोः शिक्षा मातृभाषया प्रदेया। यतोहि शिक्षा बालकेन्द्रिता वर्तते। तथा च अस्यां शिक्षायां शिक्षकः पथप्रदर्शकः भवति। अतः बालकानां स्वभाषायामेव वार्तालापः,शिक्षणं,प्रशिक्षणञ्च देयम्। एतेन बालकानां स्वाभाविकविकासे साहाय्यं प्राप्यते। एतादृशे काले अस्माकं देशम् अभितः परितः सर्वत्र कृत्रिमत्वेन आ??गलभाषायाः प्रचारप्रसारः, शिक्षणं, माध्यमश्च दृश्यते। देशस्य नागरिकेषु धारणेयं यत् आ??गलभाषायाः ज्ञानं विना उच्चशिक्षां नैव प्राप्तुं शक्यते। परन्तु स्थूलरूपेण देशस्य नैकेषु क्षेत्रेषु आदिवासीजननानां कृते प्राथमिकशिक्षा मातृभाषायां प्रदीयते। मध्यप्रदेशराज्यस्य पश्चिमीनिमा?क्षेत्रस्य आदिवासीजनानां बालकेभ्यः मातृभाषायां शिक्षा प्रदीयमाना वर्तते। छत्तीसगढराज्ये स्थानीयासु उपभाषासु यथा –पुस्तकानां निर्माणं क्रियमाणमस्ति। प्रारम्भिककक्षासु शिक्षणमाध्यमः मातृभाषै भवितव्येति।

वर्तमानकाले देशः प्राथमिककक्षासु शिक्षणाधिगमः उत्तमः नास्तीति समस्यया ग्रस्तः। शिक्षाजगति नित्यं नूतनयोजनाः संव्यूहाश्च निर्मियन्ते, परन्तु समस्यासमाधानस्थाने जटिलायते। समस्यास्थाने बालकानां शिक्षकाणां गणना भवति।'ट्युशन' इति प्रवृत्तिः स्थानं लभ्यते। परन्तु वास्तविकसमस्यां विषयं च प्रति दृष्टिः नैव गच्छति। वस्तुतः मातृभाषायां गृहभाषायां वा बालकानां भाषाक्षमताः विकसिताः भवन्ति। तां

भाषां त्यक्तवा आ??गलभाषोपरी कुर्दनं कृत्वा अपेक्षितं शिक्षणं, बोधं, अधिगमञ्च नैव प्राप्तुं शक्नुमः। अस्माकं राष्ट्रपिता महत्मागान्धिमहोदयेन स्वतन्त्र्यात् पूर्वं स्वतन्त्रभारताय 'नई तालीम''आधारभूत शिक्षा' वा इत्यस्य स्वरूपं प्रदत्तम्। अस्याः शिक्षायाः अनुसारं बालकेभ्यः मातृभाषायां शिक्षणावसरं देयम्। भाषा तथा संज्ञानात्मकबोधः इत्यनयोर्मध्ये गभीरसम्बन्धः वर्तते। गान्धिमहोदयः आ??गलभाषाशिक्षणस्य विरोधं नैव कृतवान्। ते तु शिक्षणाधिगमयोः माध्यमरुपे मातृभाषायाः समर्थनं कृत्वा आ??गलभाषामाध्यमस्य विरोधं कुर्वन्ति स्म। गान्धिमहोदयः २५ अगस्ट १९४६ तमे वर्षे हरिजनपत्रिकायां लिखितवान्–'मातृभाषा माता के स्तनपान के समान होती है, यदि मुझमें एक निरंकुश शासक की शक्तियाँ संयुक्त होती तो आज ही विदेशी माध्यम के द्वारा पढाई बन्द करा देता'।

सम्प्रति प्रत्येक विद्यालयीयछात्रः द्वन्द्वः, तंन्यता, चिन्ता इत्यादिभिः प्रपीडितः। तेषां बालकानां गृहभाषा तथा विद्यालयीभाषा अनयोर्मध्ये साम्यतायाः अभावः साक्षात् दृश्यते एव । बालकस्य विद्यालयीयभाषाम् अभिभावकाः नाधिगच्छन्ति। परिणामस्वरूपं ते बालकानां शिक्षणे साहाय्यं नैव कर्तुं पारयन्ति ,अतः छात्र – अभिभावकयोर्मध्ये दूरीभावः उत्पाद्यते। एवमेव शिक्षोद्देश्यप्राप्ति हेतोः छात्र-शिक्षकयोर्मद्धे सम्बन्धः, अन्तक्रियाः, परस्परमवबोधः, ज्ञानञ्च स्युः। शिक्षाशास्त्रिस्किनरमहोदयस्य कथनमस्ति यत् –'संस्कृतिं बोधनाय शिक्षकः छात्रम् जानीयात्','छात्रम् अभिज्ञानं विना शिक्षौचित्यं नास्ति'इति। छात्रः निर्जीवियन्त्रं न, बल्कि प्रेम, ईर्ष्य , सुख–दुःख इत्यादिभि परिपूर्णः जीवितप्राणी वर्तते। सः स्वमनोदशानुगुणं व्यवहारेण साकं किमपि ज्ञानं शिक्षितुं प्रेरितो भवति। एतद् सर्वं तु शिक्षकः छात्रस्य भाषामाध्यमेन शिक्षयति चेदेव सम्भवति। अस्माकं देशे प्राथमिकशिक्षासम्बन्धिविषयकं शोधकार्येषु प्रतिपादितं यत् 'प्राथमिकस्तरीयबालकानां शिक्षायाः च दशादयनीयास्थितौ वर्तते'। अनुसन्धानेषु इदं स्पष्टीकृतं यत्-'प्राथमिकस्तरीयबालकाः मानसिकतन्यतया प्रपीडिताः सन्ति। एतस्य कारणं तु आ??गलभाषामाध्यमपाठ्यक्रमः। गृहे तु बालकः मातृभाषायां हिन्दिभाषायां वा वार्तालापं करोति , गृहम् अभितः परितः अपि मातृभाषासम्मतं वातावरणमस्ति'। परन्तु विद्यालये विषयान् आ??गलभाषया पठति। उत्साहं विना बालकः शब्दान् कण्ठस्थीकरोति। शनैः शनैः कण्ठस्थीकरणसामर्थेन तस्य मनसि तन्यता, भयः, निर्बलता इत्यादयः जायन्ते। बालकेषु सन्तुलितं व्यक्तित्वं न विकसितं जायते।

श्रीमती एनी बेसेंट महोदया वदति यत् –'बालकः अन्ततोगत्वा समाजे एव तिष्ठति' । एतेन शिक्षोद्देश्यं बालकस्य सामाजीकरणमिति। सामाजीकरणप्रक्रियायाः आधारः एव भाषा । यावत्पर्यन्तं बालकसमाजयोः भाषायामेकरुपता न भविष्यति तावत्पर्यन्तं सामाजीकरणप्रक्रियायां बाधा समस्या





तिष्ठति। अतएव श्रीमति एनी बीसेंट महोदया प्राथमिकस्तरीयशिक्षाहेतोः मातृभाषामेव प्राथमिकता ददाति। भाषाशास्त्रीराइबर्न महोदयीय कथनमस्ति यत् –'मातृभाषा आनन्दस्य , प्रसन्नतायाः , ज्ञानस्य च स्रोतः तथा रुचीनाम् अनुश्रुतीनाञ्च निर्देशकः , ईश्वरेण प्रदत्ता सर्वोत्तमशक्तेश्च प्रयोगसाधनं वर्तते यया वयं तस्याः निकषा भवामः'। मातृभाषायां शिक्षां शिक्षायाः माध्यमरुपे आ??गलभाषालेखकः वेल्सफोर्डमहोदयः अपि स्वीकरोति। तेषां कथनं यत् –'केवलएक ही भाषा में हमारे भावों की स्पष्ट व्यंजना हो सकती हैं, केवल एक ही भाषा के शब्दों में सूक्ष्म संकेतो को हम सहज और निश्चित रुप से ग्रहण कर सकते है। यह वह भाषा होती है जिसे हम अपनी माता के दूध के साथ सीखते है। जिसमें हम अपनी प्रारम्भिक प्रार्थनाओं, हर्ष तथा शोक के उद ?गारों को व्यक्त करते है। किसी दूसरी भाषा को शिक्षाका माध्यम बनाना छात्र के श्रम को अनावश्यक रुप से वढाना ही नहीं अपितु उसके मस्तिष्क की स्वतन्त्र गति को पंगु भी बना देना है'। वस्तुतः वेल्सफोर्डमहोदयीयकथनं सत्यमस्ति। प्राथमिकशिक्षायाः स्तरे अस्माकं देशे इदमेव जायमानं वर्तते।

शिक्षामनोविज्ञानमतेः बालकः पूर्वानुभवसम्बन्धिविषयान् प्रतिशिक्षेण रुचिं प्रदर्शति। बालकः तान् अनुभवान् स्वभाषायामेव प्राप्नोति। विशिष्य भाषाशिक्षणे तु इदं तथ्यं शतप्रतिशतं सत्यमस्ति। यतोहि भाषाशिक्षणे भाषाकौशलानि सम्मिलितानि भवन्ति। भाषा शिक्षणस्य एतेषां कौशलानामुपरि अधिकारः मातृभाषया एव प्राप्तुं शक्यते, तथा च एतदेव शिक्षाशास्त्रीयपक्षे भाषाधिगमः इति । अत एव विश्वशिक्षाशास्त्रिणः वदन्ति यत् प्राथमिकशिक्षा मातृभाषां दातव्येति। पण्डित मदनमोहनमालवीयमहोदयस्य

आभार – निहारीका रविया कथनमस्ति यत् –'कस्यापि विदेशीभाषायाः मातृभाषास्थाने ज्ञानप्रदानं तु मूर्खतापूर्णकार्यमिति'। आचार्यः विनोबाभावेमहाशयस्य वचनं यत् –'प्राथमिकावस्थायां बालकेभ्यः तेषां मातृभाषायामेव शिक्षा प्रदेया'। मार्टिन–लुथर–जाँन् काल्विन–रावेल–मिल्टन–माँटेन–कमेनियस–जाँन लोक–पेस्टोलाँजीप्रभृतीनां बृद्धिजीविनां मतानि सन्ति यत्– अन्यभाषायां प्राथमिकस्तरे शिक्षणं बालकस्य शीघ्रविकासे अवरोधं त्रुटिञ्च उत्पन्नं करोति। रुसोमहोदयः लिखति यत् –'शिक्षायाः प्रमुखं कार्यं मनुष्यं तस्य वास्तविकरूपे मनुष्यनिर्माणमिति। एतद् मातृभाषायां शिक्षायाः महत्त्वं स्पष्टीकरोति'। मातृभाषायां शिक्षा मनोवैज्ञानिकाराधारेण सह देशस्य संस्कृत्या संयुक्तः विषयः भवति। डाँ. जाकिर हुसैनसमितेः संस्तुतिः यत्- सम्पूर्णशिक्षायाः आधाररूपेणमातृभाषा भवितव्या। मातृभाषायाः माध्यमेन परम्परां, संस्कृतिं, भावनाञ्च ज्ञातुं शक्यते। अतः सामाजिक शिक्षायाः अमूल्यं साधनं मातृभाषा

भवति। तथा च अनया शिक्षया नैतिकधार्मिकगुणाः प्राप्ताः भवितुमर्हन्ति। बालकस्य भावप्रकाशनस्य मातृभाषा एकं सर्वश्रेष्ठं साधनमस्ति। गान्धिमहोदयः वदति यत् –आ ? ?गलभाषामाध्यमेन शिक्षया बालकेषु विचाराणां स्पष्टता न जायते। मातृभाषां बालकः जन्मना एव वातावरणेन अर्जयति। तस्यां भाषायां स्वविचारान् स्पष्टतया वदति। भाषैव शिक्षणाधिगमयोः प्रमुखाधारः वर्तते। अस्माकं संविधानस्यानुच्छेदः संख्या ३५०(क) इत्यनुसारं कस्यापि भाषायाः अल्पसंख्यकसमुदायस्य बालकेभ्यः प्राथमिकस्तरपर्यन्तं स्वमातृभाषायाः माध्यमेन शिक्षाप्राप्तेः अधिकारः विद्यते। अनुच्छेदेऽस्मिन् लिखितमस्ति यत् भाषायी-अल्पसंख्यकवर्गेभ्यः विशेषाधिकारी भविष्यति, राष्ट्रपतिमहोदयः तं विशेषाधिकारीं नियुंक्ते सः विशेषाधिकारी, राष्ट्रपतिमहोदाय प्रतिवेदनं समर्पयति । तथा च राष्ट्रपतिमहोदयाय संविधानान्तर्गतं भाषागतं-अल्पसंख्यकवर्गेभ्यः कृते स्वमातृभाषायां शिक्षणाय राज्यसर्वकारान् संसूचितं करिष्यति। भारतीयसंविधानस्यायमनुच्छेदः भारतस्य राष्ट्रपतिमहोदयाय विशेषाधिकारं प्रददाति।

अस्माकं देशे प्राथमिकशिक्षा आधिक्येन आ ? ?गलभाषायां प्रदीयमाना वर्तते। आ ? ?गलभाषायाः पठनलेखनकौशलानाम् अभावे विद्यालयेषु शिक्षकवृत्तिः अपि नास्ति। मातृभाषाविषयकज्ञानं कोऽपि न प्रयच्छति । आ ? ?गलभाषामाध्यमस्य कारणेन छात्राः न केवलं भाषागतरूपेण अपितु अन्यविषयेषु, चिन्तने , मनने च अविकसिताः जायन्ते । वस्तुतः मातृभाषा सञ्चारसाधनेन सह विचारस्य , अवबोधस्य , चिन्तनस्य, संज्ञानस्य च आधारः वर्तते। भाषां विना चिन्तनमेव नास्ति। भाषैव मानवं मानवत्वेन निर्माति। विश्वस्य नैकेषु देशेषु आ ? ?गलभाषा पञ्चमकक्षानन्तरं पाठ्यते। तेषां शिक्षामाध्यमः मातृभाषा भवति। अतः शिक्षामाध्यमः भारते मातृभाषा भवितव्या। आ ? ?गलभाषायाः माध्यमः अधिगमप्रक्रियां प्रभावयति बाधाञ्च जनयति। छात्रेषु मातृभाषागतक्षमताभिः सह बोधः ज्ञानं च निर्मितं जायते। देशेऽस्मिन् समाजिकसौहार्दतायै परस्परं जनाः भाषासंस्कृतयोः कृते सम्मानं दद्युः। इदं सम्मानं ज्ञानं विना नैव सम्भवति । अन्यथा अज्ञानता , भयं, घृणा, असहिष्णुता च वर्धते। राष्ट्रिय- अस्मितायाः अखण्डतायाम् एताः समस्याःकार्यं कुर्वन्ति। साम्प्रतं विश्वं तु बहुभाषिकता, संज्ञानात्मकविकासः, शैक्षिकोपलब्धिः इत्येतेषां मध्ये सकारात्मकसम्बन्धेषु विश्वसति। अतः विद्यालयेषु मातृभाषामाध्यमत्वेन बहुभाषीयशिक्षणं संवर्धनीयमिति आवश्यकमस्ति। वयं सर्वे विचारपुरस्सरं राज्येषु विद्यालयीयकक्षासु मातृभाषामाध्यमस्य क्रियान्वयनं प्रकल्पयामः

***सन्दर्भग्रन्थसूची -***

१. किशोर, डॉ.अवधेश(२००९), आधुनिक भारत में शिक्षा, आगरा, अग्रवाल प्रकाशन।





२. पाठक, पी.डी.(१९८३), भारतीयशिक्षा और उसकी समस्याँए, आगरा, विनोद पुस्तक मन्दिर।

३. शर्मा, डॉ.मार्तण्ड(२०११), हिन्दी शिक्षण, इलाहबाद, शारदा पुस्तक भवन।

४. गुर्जर, डॉ.भाग्यसिंह(२०१८),भारत में शिक्षा का माध्यम-एक विश्लेषण, शोधपत्र, प्रिन्टिंग ऐरा अन्ताराष्ट्रिय शोधपत्रिका, हर्षवर्धन प्रकाशन महाराष्ट्र ।

*शिक्षाशास्त्रविभागः*

*राष्ट्रियसंस्कृतसंस्थानम्*

*श्रीसदाशिवपरिसरः, पुरी।*

# सिक्खशिक्षादर्शनम्

**डा.वृन्दावन पात्र**

शिक्षाशास्त्रविभागः

भारते सिक्खधर्मस्य अभ्युदयः पञ्चदशशताब्द्याम् अभवत्। तदानीन्तनसमाजे कुसंस्कारस्य, अन्धविश्वासस्य, कुप्रथायाः, जातिवादस्य च आधिक्यमासीत्। भारतं मुगलशासनाधीने आसीत्। मुगलशासकानां असहिष्णुतायाः हेतोः समाजे भयस्य वातावरणं परिव्याप्तमासीत्। हिन्दुधर्मस्य अस्तित्वं लुप्तप्रायमभवत्। समाजस्य एतादृशस्थितेः निराकरणार्थं हिन्दुधर्मस्य पुनः संस्थापनार्थं च नानकदेवस्य आविर्भावः जातः। तेन प्रथमतया सिक्खपन्थस्य नानकपन्थस्य वा प्रारम्भः कृतः। स एव सिक्खधर्मस्य संस्थापकरूपेण ख्यातः। हिन्दु–मुस्लिमजनानां धार्मिकसमन्वयेन तेन समाजे एकस्य नूतनधर्मस्य स्थापनं कृतम्। नानकदेवेन प्रतिपादितः धर्मोऽयं हिन्दुधर्मात् निसृतः। सिक्खधर्मस्य सन्दर्भे (New International Webster's Dictionary) इति कोशग्रन्थे लिखितं वर्तते यत् सिक्खधर्मः सिक्खधर्मावलम्बिनां पन्थः एवं सम्प्रदायोऽस्ति, अयं विविधजातिं परित्यज्य जीवनस्य पवित्रतायाः सहिष्णुतायाश्च उपयोगं कृत्वा हिंदुधर्मस्य तादृशशिक्षया सह पारसीसूफीनां शिक्षायाः सम्बन्धीकरणस्य एका एकेश्वरवादपद्धतिरस्ति।

"Sikhism is the creed and practices of the Sikhs, it is a monotheistic system, combining the teachings of the persian sufis with those of Hinduism, rejecting caste and enjoining purity of life and tolerance."

"सिक्ख" इति शब्दस्यार्थः भवति शिष्यः। सिक्खधर्मे गुरुः ईश्वरः भवति। अन्ये तस्य शिष्याः भवन्ति। "सिक्ख" शब्दः शिक्षार्थे (सीख) प्रयोक्तुं शक्यते। धर्मेऽस्मिन् गुरु-शिष्यपरम्परया समुचितशिक्षा लभ्यते। शिक्षार्थेऽपि अस्य शब्दस्य प्रयोगः कर्तुं शक्यते। शिक्खधर्मावलम्बिनः शिखामपि धारयन्ति।

गुरु नानकदेवः सिक्खधर्मस्य आदिगुरुः आसीत्। गुरुनानकदेवस्य विषये इयमुक्तिः प्रसिद्धा वर्तते। तद्यथा-

**"गुरु नानक शाह फकीर ।**
**हिन्दु का गुरु मुसलमान का पीर ।।"**

सिक्खधर्मे गुरोः महत्त्वं स्वीक्रियते। सिक्खधर्मे दशगुरवः अभवन्। इमे गुरवः सिक्खधर्मस्य प्रचारे प्रसारे च विशेषयोगदानं दत्तवन्तः। तेषां नामानि अधोलिखितानि भवन्ति।

१) गुरु नानकदेवः, २) गुरु-अगंददेवः, ३) गुरु-अमरदासः, ४) गुरु-रामदासः, ५) गुरु अर्जुनदेवः, ६) गुरु हरगोविन्दसिंहः, ७) गुरु हरिरायः, ८) गुरु-हरिकृष्णः, ९) गुरु-तेगबहादुरः, १०) गुरु-गोविन्दसिंहश्च।

गुरुगोविन्दसिंहस्यानन्तरं सिक्खपन्थः विविधशाखासु विभाजितः। सर्वप्रथममस्य शाखाद्वयम् अभवत् - सहजधारी सिंहश्चेति। सहजधारिणः न किमपि प्रतीकं चिह्नं वा धारयन्ति। अस्य पन्थस्य पुनर्विभाजनं पञ्चशाखासु जातम्। तासां नामानि १) नानकपन्थी, २) उदासी, ३) हन्दाली, ४) मीनः, ५) रामरंजः, ६) सेवापन्थी च भवन्ति। तथैव सिंहपन्थोऽपि शाखात्रयेषु विभक्तः। ते यथा- १) खालसा, २) निर्मलः, ३) अकाली चेति। यद्यपि एतासु शाखासु सामान्यभेदः दृश्यते तथापि सर्वाः शाखाः गुरुनानकदेवस्य सिद्धान्तमङ्गीकुर्वन्ति। एतेषु पन्थेषु ९पञ्चग्रन्थी" इत्यस्य महत्त्वं वर्तते। पञ्चग्रन्थीषु प्रार्थनायाः पञ्चप्रकाराः पजी, रहरासः, सोहिला, सुखमनी, आसादीवारः इत्यादयः अन्तर्भवन्ति।

सिक्खधर्मे पञ्च ९क" काराणां महत्त्वं वर्तते। ते य ?था- केशः, कंघा, कच्छा, कडा, कृपाणश्चेति। एते धार्मिक चिह्नानीति मन्यन्ते। गुरुगोविन्दसिंहेन "आनन्दपुरसाहिब" इति स्थाने "वैशाखी" इति दिने





सिक्खजनान् आहूय एकस्य नूतनभ्रातृसङ्घस्य (खालसा) स्थापना कृता। "खालसा" इति शब्दस्य अर्थः भवति शुद्धप्राणी। गुरुभक्त्याधारेण पञ्चजनानां चयनमभवत्। ते "पञ्च पियारा" इति नाम्ना प्रसिद्धाः। एतेभ्यः दीक्षाग्रहणं कृत्वा जनाः सङ्घस्य सदस्याः भवन्ति स्म। ये जनाः दीक्षां प्राप्तवन्तः ते स्वनामभिः सह "सिंहः" इति योजितवन्तः। परन्तु याः स्त्रियः दीक्षां स्वीकृतवत्यः ताः "कौर" इति उपनाम्ना नामिताः। गुरुगोविन्दसिंहेन पञ्च "क" काराणां धारणं कर्तुम् आदेशः प्रदत्तः। तदारभ्य सिक्खजनेषु एषा प्रथा प्रचलिताऽस्ति।

"गुरुग्रन्थसाहिवः" सिक्खधर्मस्य पवित्रधर्मग्रन्थः वर्तते। धर्मग्रन्थं प्रति सिक्खजनानां परमश्रद्धा अस्ति। गुरुग्रन्थसाहिवस्य प्रारम्भः मूलमन्त्रेण भवति। अस्मिन् मन्त्रे गुरुनानकदेवेन ईश्वरस्य व्याख्या कृता वर्तते। प्रत्येकं प्रार्थनायाम् (अरदासः) मूलमन्त्रस्य पाठः क्रियते। मूलमन्त्रः निम्नप्रकारे भवति। -

**एक ओंकार, सतनाम, करता पुरख ।**
**निरभऊ, निरवैर, अकालमूरति, अजूनी सैभं, गुरु परसादि ।**

गुरुग्रन्थसाहिवं विहाय सिक्खधर्मे अन्ये ग्रन्थाः अपि सन्ति। तेषु प्रमुखाः आदिग्रन्थः, दशमागुरुग्रन्थः, जनमसाखी, जपसाहिब, उपजी च भवन्ति।

**सिक्खधर्मस्य वैशिष्ट्यानि :-** सिक्खधर्मस्य प्रमुखवैशिष्ट्यानि अधोलिखितानि भवितुमर्हन्ति। तानि यथा-

१) ईश्वरः एकैव सर्वशक्तिमान् अद्वितीयश्च।
२) ईश्वरं विहाय इतरेषां देवानां पूजा नैव कर्तव्या।
३) धर्मान्धता, सामाजिककुप्रथा, व्यर्थकर्मकाण्डादिषु विश्वासः न करणीयः।
४) जातिवादस्य वर्जनमवश्यं करणीयम्।
५) सत्यम्, अहिंसा, उदारता, परोपकारः, धर्मादीनां सद्गुणानां पालनं कर्तव्यम्।
६) प्रतिदिनं गुरुद्वारे गत्वा सत्सङ्गतिः करणीया।
७) ईश्वरस्य नामस्मरणं कर्तुं प्रार्थना आचरणीया।

८) स्वपारिवारिकदायित्वस्य निर्वहणं कृत्वा अन्यस्य सेवा करणीया।

**सिक्खदर्शनस्य तत्त्वानि** - सर्वेषु धर्मेषु धार्मिकभावनाभिः सह दार्शनिकतत्त्वानि निहितानि भवन्ति। सिक्खधर्मे यद्यपि दार्शनिकसिद्धान्ताः स्पष्टतया नोपलभ्यन्ते तथापि कानिचन तत्त्वानि अत्र प्रतिपाद्यन्ते। यथा-

**१) ईश्वरः** - ईश्वरः एकः अद्वितीयश्च। सैव ओंकारस्वरूपः। तस्य नाम्नि सत्यमस्ति। सः जगतः स्रष्टा। सः निर्भीकः, तस्य कोऽपि शत्रुः नास्ति। सर्वेस्मिन् काले विद्यमानेऽस्ति। स निर्विकारः अमूर्तश्च भवति। ईश्वरः अयोनिसम्भूतोऽस्ति। गुरोः प्रसादात् ईश्वरः लभ्यते। एतदर्थं ईश्वरस्य सेवा करणीया। ईश्वरस्य नाम जपः (सतनाम) करणीयः।

**२) अवतारः** - सिक्खधर्मे अवतारवादः नास्ति। ईश्वरः मानवरूपेण नैव अवतीर्णः भवति।

**३) माया** - सिक्खमते माया भ्रान्तिमुत्पादयति। ईश्वरप्राप्त्यर्थं मायायाः उपरि विजयः प्राप्तव्यः इति निर्देशः प्रदत्तः। अंशविशेषः।

**४) मोक्षः** - मोक्षप्राप्तिरेव मनुष्यस्य अन्तिमं लक्ष्यं भवति। आत्मा ईश्वरस्य अंशविशेषः। आत्मा परमात्मनि यदा विलीनः भवति तदा मनुष्यः मुक्तः भवति । सत्कर्मणा मोक्षप्राप्तिः जायते।

**५) सृष्टिः** - सिक्खदर्शने सृष्टेः स्रष्टा ईश्वरः (वाहेगुरु) ईश्वरः अस्ति । ईश्वरः न केनापि सृष्टः । सृष्टेः पूर्वं सम्पूर्णं जगत् अन्धकारेण आच्छादितम् आसीत् । ईश्वरस्य इच्छया (हुकुम) सृष्टेः संरचना जाता । प्रथमतया जल-स्थल-आकाशादीनाम् उत्पत्तिः अभूत् । तदनन्तरं विविधप्रकारकाणां प्राणिनां जन्म समभवत् । आकाशे सूर्यः, चन्द्रः, ग्रहः, नक्षत्रादीनां परिप्रकाशः अभवत् । ईश्वरस्य प्रभावेण माया प्रकटिता । मायावशे आगत्य मानवानां उत्पत्तिः जाता । ईश्वरस्य छाया भवति माया । ईश्वरः संसारस्य सृष्टिकर्त्ता, पालनकर्ता, संहारकर्त्ता चेति ज्ञायते । सृष्टिः स्थायी न भवति, परन्तु वास्तविकी भवति । ईश्वरस्य उत्कर्षणशक्त्या सृष्टेः संरचना भवति । ईश्वरस्य आकर्षणशक्त्या सृष्टिः ध्वसं याति ।

**६) सिक्खदर्शने शिक्षा :-** सिक्खदर्शने उपदेशद्वारा समुचितशिक्षा दीयते । शिक्षा एव ज्ञानमिति प्रतिपादितं वर्तते दर्शनेऽस्मिन् । ज्ञानस्य गौरवं प्रतिपादयन् गुरुगोविन्दसिंहेन गुरुवाण्याः एकस्मिन् शब्दे (शवद-गुरुवाण्याः एकं गानम्) उक्तं यत् पण्डिताः शास्त्रस्याध्ययनं कुर्वन्ति । परन्तु शास्त्रस्य गूढतत्त्वं





नावगच्छन्ति । अन्येभ्यः उपदेशं प्रयच्छन्ति । इत्थं असत्यमुक्त्वा संसारे अटन्नेव स्व जीविकानिर्वाहं कुर्वन्ति । एतेषां शब्दस्य (शबद) तत्त्वविषये ज्ञानं नास्ति । ज्ञानं एते मिथ्यावादविवादे प्रवृत्ताः भवन्ति । अस्मिन् सन्दर्भे तेनोक्तम् -

**पण्डित वाचहि पोथिआ न बूझहि बीचार ।**

**आन को मती दे चलहि माइआ का बमारू ।**

**कहनी झूठी जगु भवै रहणी सबहु सबदु सु सारु ।।६।। (आदिग्रन्थ.पृ.५५)**

'गुरुग्रन्थसाहिब" इति ग्रन्थस्य 'जपजी साहिब" इति भागः सचखण्डः, घटमखण्डः, गियानखण्डः, सरमखण्डः, करमखण्डादि पञ्चखण्डेषु विभाजितः । तत्र ज्ञानखण्डस्य महत्त्वं सर्वोपि ईश्वरस्य इच्छां (हुकुम) विना ज्ञानं न प्राप्यते । सिक्खदर्शने आत्मज्ञानस्य (परा) महत्त्वं स्वीकृतं वर्तते । न केवलम् आत्मज्ञानस्य अपितु लौकिक (अपरा) ज्ञानस्य महत्त्वमपि अङ्गीक्रियते ।

**सिक्खदर्शने शिक्षायाः उद्देश्यानि** - सिक्खदर्शनस्य अधोलिखितानि उद्देश्यानि भवितुमर्हन्ति ।

**१) धार्मिकसमुन्नतिः** - सिक्खदर्शने धर्मस्य तत्त्वानि निहितानि वर्तन्ते । धार्मिकसमुन्नतये शिक्षा प्रमुखं साधनमिति अङ्गीक्रियते । धर्मज्ञानस्य विस्ताराय शिक्षायाः प्रयेगः क्रियते स्म । सिक्खधर्मस्य प्रचाराय प्रसाराय च गुरुः नानकदेवः देशाटनं कुरुते स्म । सिक्खमते सर्वे धर्माः समानाः । जातिवादस्य भेदभावं दूरीकर्तुं नानकदेवेन प्रयासः कृतः । पवित्रजीवनं यः यापयति सः वास्तविकं ज्ञानी भवति । स्वच्छात्मा शीघ्रमेव ईश्वरस्य अनुग्रहं प्राप्नोति । ईश्वरभक्तिः गुरुवाणीमाध्यमेन प्राप्यते । सन्यासापेक्षया गृहस्थजीवनं सर्वोत्कृष्टमिति नानकदेवेनोक्तम् ।

**२) ईश्वरप्राप्तिः** - सर्वेषु दर्शनेषु ईश्वरस्य महत्त्वं वर्तते । सर्वेषां धर्माणां मूलं ईश्वरोऽस्ति । सैव परमपितारूपेण सुप्रतिष्ठितः । ईश्वरस्य सर्वव्यापकत्वविषये गुरुनानकदेवेन स्पष्टीकृतम् । तद्यथा -

**"अब्वल अल्लाह नूर नुमाया कुदरत दे सब बन्दे ।**

**एक नूर ते सब जग उपजिया कौन भले कौन मन्दे ।।"**

सिक्खदर्शने ईश्वरः (वाहेगुरु) निराकारः, अकालाः, अलेखः सर्वव्यापकः चास्ति । ईश्वरप्राप्तिरेव सिक्खदर्शनस्य चरमलक्ष्यमिति मन्यते । सत्सङ्गेन, नामसंकीर्तनेन, सत्कर्मणा, सदाचारेण च ईश्वरः प्राप्यते ।

३) **आत्मशुद्धिः** - आत्मशुद्धिः सिक्खशिक्षादर्शनस्य एकं प्रमुखमुद्देश्यं भवति । शुद्धात्मा आत्मज्ञानं प्राप्य ईश्वरस्य साक्षात्कारं करोति । सत्यस्य परिपालनेन, सद्ज्ञानेन, दुर्व्यसनानां त्यागेन, ध्यानेन, गुरोः आज्ञापालनेन च आत्मशुद्धिर्जायते । मनुष्यस्य शरीरे कामः, क्रोधः, लोभः, मोहः, अहंकारश्चेति पञ्चचौराः निवसन्ति । एते चौराः पापकर्म कर्तुं सदैव मनुष्यं प्रचोदयन्ति । शिक्षाद्वारा एतेषां निराकरणं कर्तुं शक्यते । एतेषां नियन्त्रणेन मनुष्यः पवित्रजीवनं यापयितुं समर्थः भवति । आत्मशुद्धता ईश्वरसान्निध्यं प्राप्तुं सहायतां विदधाति । अतः चित्तशुद्ध्यर्थं मिताहारम् उपवासञ्च प्रति गुरुनानकदेवेन बलं प्रदत्तम् ।

४) **सच्चरित्रनिर्माणम्** - सदाचारेण सच्चरित्रस्य निर्माणं भवति । सदाचारस्य परिपालनेन सद्गुणाः विकसिताः भवन्ति । यद्यपि उदारता, शान्तिः, अहिंसा, परोपकारः, त्यागः, समादारः, सेवा, प्रेम, ईश्वरभक्त्यादयः बहवः सद्गुणास्सन्ति तथापि सिक्खधर्मे पञ्चसद्गुणानामुल्लेखः वर्तते । ते यथा - सन्तोषः, सहानुभूतिः, दया, धैर्यं, नैतिकता चेति । एतान् गुणान् समाश्रित्य ईश्वरस्य कृपा लभ्यते ।

५) **सामाजिकविकासः** - तदानीन्तनसमाजस्य स्थितिः सुदृढा नासीत् । समाजे अन्धविश्वासस्य, जातिवादस्य, रूढिवादस्य, कुप्रथायाश्च आधिक्यमासीत् । दुर्बलानामुपरि सबलानां शासनमासीत् दृढतरम्। समाजात् एतादृशं भेद-भावपूर्णं वातावरणं दूरीकर्तुं प्रयासः कृतः आसीत् । जनेषु प्रेम, सेवा, सेवा, परोपकारः, भ्रातृभावादि भावनानां समुत्पादनाय गुरुनानकदेवेन प्रयत्नः कृतः । उद्यमेन कार्यसिद्धिरिति उक्तिः जायते । सत्कर्म कृत्वा स्वश्रमेण जीविकानिर्वाहं कुर्यात् मनुष्यः । अर्जितधनस्य कियदंशं धर्मकार्ये नियोजयेत् । एवं रीत्या मनुष्यः कार्यं सम्पाद्य स्वस्य समाजस्य च विकासं कर्तुं शक्नोति ।

६) **मानवसेवा** - सिक्खदर्शने सेवायाः महत्त्वं वर्तते । मानवसेवया ईश्वरः प्रीतः भवति । समाजतः भेदभावं दूरीकृत्य समाजकल्याणाय जनेषु समभावनामुत्पादयितुं सिक्खदर्शनं जनान् प्रेरयति। गुरुद्वारेषु मुक्तभोजनस्य (लंगर), सामूहिकसेवायाः च व्यवस्था क्रियते । तत्र मिलित्वा जनाः भोजनं कुर्वन्ति । एकः अन्यस्य सहायतां च करोति । सेवाभावनया सर्वान् प्रति प्रेवभावना वर्धते ।

**सिक्खशिक्षादर्शने पाठ्यक्रमः** - मूलतः सिक्खधर्मे धार्मिकतत्त्वानि, दार्शनिकतत्त्वानि च प्रतिपादितानि सन्ति । सिक्खधर्मस्य पवित्रधर्मग्रन्थे (गुरुग्रन्थसाहिब) पाठ्यक्रमस्य स्पष्टचित्रं न दृश्यते। परन्तु उपदेशव्याजेन तत्र केचन विषयाः सूचिताः वर्तन्ते । सिक्खदर्शने पाठ्यक्रमत्वेन द्विविधः पाठ्यक्रमः संसूच्यते - धार्मिकः, लौकिकश्चेति ।





धार्मिकपाठ्यक्रमे धर्मशास्त्रं, पुराणं, दर्शनशास्त्रं च अन्तर्भवन्ति । लौकिकपाठ्यक्रमे व्यावहारिकविषयाः भवन्ति । व्यावहारिकविषयेषु भाषा, साहित्यं, गणितं, इतिहासः, भूगोलः, समाजविज्ञानं, राजनीतिशास्त्रं, संगीतं, नृत्यं, कला, संस्कृति सैनिकशिक्षादिविषयाः प्रामुख्यं भजन्ते । गुरुः नानकदेवः पञ्जाबी, संस्कृतं, हिन्दी, अरबी, फारसी इत्यादीना ज्ञाता आसीत् । अनेन ज्ञातुं शक्यते यत् एतासां भाषाणां शिक्षणव्यवस्थापि आसीत् प्रचलिता । राज्यस्य शासनतन्त्रं ज्ञातुं राजनीतिशास्त्रस्य उपयोगः क्रियते स्म । तथैव बाह्यशत्रुभिः सह युद्धं कर्तुं सैनिकप्रशिक्षणस्य व्यवस्थाऽपि कल्पिता आसीत् ।

**शिक्षणविधयः** - सिंक्खदर्शने विविधशिक्षणविधीनाम् उपयोगः क्रियते स्म । सिक्खदर्शनस्य शिक्षणे अधोलिखितविधयः प्रयुक्ताः भवन्ति स्म ।

१) **उपदेशविधिः** - सिक्खधर्मे उपदेशमाध्यमेन शिक्षा दीयते स्म । "गुरु-ग्रन्थसाहिब" इति ग्रन्थे बहवः उपदेशाः वर्तन्ते । उपदेशप्रदानमेव सिक्खशिक्षादर्शनस्य एकः प्रमुखः विधिरिति स्वीक्रियते । उपदेशद्वारा समुचितं ज्ञानं प्राप्यते ।

२) **मौखिकविधिः** - सिक्खधर्मे मौखिकविधिः प्रमुखः आसीत् । प्रारम्भिककाले धर्मस्य प्रचाराय प्रसाराय च अस्य विधेः उपयोगः क्रियते स्म । कथाकथनं, भाषणप्रदानं, व्याख्यानमादिक्रियाः, मौखिकविधिना सम्पाद्यन्ते । शङ्कासमाधाने कठिनप्रत्ययानां स्पष्टीकरणे व्याख्यानं प्रयुज्यते स्म । व्याख्यानं रुचिकरं कर्तुं विविधकथानामुल्लेखः क्रियते स्म ।

३) **पर्यटनविधिः** - सिक्खशिक्षाव्यवस्थायां शिक्षणस्य विशिष्टाङ्गत्वेन स्वीकृतमासीत् पर्यटनम्। गुरुनानकदेवः स्वयं पर्यटनप्रियः आसीत् । सत्यस्य सन्देशं धर्मस्य ज्ञानं च प्रदातुं तेन विविधस्थानानां परिभ्रमणं कृतम् । सः न केवलं स्वदेशस्य अपितु अरब, तेहरान्, बगदादादिस्थलानां परिदर्शनं कृतवान्। पर्यटनेन प्रत्यक्षानुभवेन च सह वास्तविकज्ञानं प्राप्यते । जनानां शारीरिकः बौद्धिकः, आध्यात्मिकश्च विकासः जायते । सिक्खधर्मेऽपि तीर्थानां महत्त्वं वर्तते । पवित्रतीर्थस्थलेषु दरबारसाहिबः, आनन्दपुरसाहिबः, पाटनासाहिबः, हजूरसाहिबः, नानकानासाहिबः, फतेहगढसाहिबः, हेमकुण्डसाहिबश्च प्रमुखाः सन्ति ।

४) **अभ्यासविधिः** - सिक्खशिक्षादर्शने अभ्यासविधेः उपयोगः क्रियते स्म । ईश्वरस्य (वाहेगुरु) नामस्मरणस्य नामजपस्य च महत्त्वं वर्तते । एतदर्थं सिक्खजनाः प्रत्यहं गुरुद्वारं गत्वा ईश्वरस्य ध्यानं,

नामसंकीर्तनं (शबदकीर्तन) च कुर्वन्ति । सिक्खधर्मे सत्कर्मणः सच्छेवायाः च वैशिष्ट्यमप्यस्ति । सत्कर्मणा धनोपार्जनं कृत्वा अर्जितधनस्य कियदंशः अवश्यं दातव्यः इति कर्मणः श्रेष्ठत्वं प्रतिपाद्यते सिक्खधर्मे । सेवात्रयस्य शारीरिकसेवा, मानसिकसेवा, भौतिकसेवा चेति सेवात्रयस्य (तन-मन-धन) महत्त्वमपि अङ्गीक्रियते । गुरुद्वारे सर्वेषां कृते मुक्तभोजनस्य (लंगर) व्यवस्था वर्तते । सर्वे भोजनस्य प्रस्तुतीकरणे वितरणे च सहायतां कुर्वन्ति । जातिधर्मवर्ण निर्विशेषेण सर्वे मिलित्वा भोजनं कुर्वन्ति । अभ्यासेन एतादृशाः विविधक्रियाः सम्पाद्यन्ते प्रतिदिनम् । अभ्यासविधिः क्रियाविधिरिति वक्तुं शक्यते।

**गुरुशिष्यपरम्परा** - प्राचीनकालादारभ्यः अस्माकं देशे गुरुपरम्परा प्रचलिता वर्तते । सिक्खधर्मे हिन्दुधर्मस्य प्रभावः दृश्यते । यथा हिन्दुधर्मे गुरोः गौरवं वर्णितमस्ति तथैव सिक्खधर्मेऽपि गुरोः श्रेष्ठत्वं स्वीकृतं वर्तते । न केवलं गुरोः महत्त्वं वर्तते सिक्खधर्मे अपितु शिष्यस्य महत्त्वमपि प्रामुख्यं भजते । यतोहि "शिष्यः" शब्दादेव "सिक्ख" शब्दस्य उत्पत्तिर्जायते । गुरुः सत्यस्वरूपं भवति । तस्य नाम सत्यमस्ति । गुरोः महीमानं वर्णयन् गुरुणा नानकदेवेनोक्तम् -

"आदि सचु जुगादि सचु ।
है भी सचु नानकं होसी भी सचु ।।"

सिक्खधर्मे ईश्वरः परमगुरुः मन्यते । आदिगुरुं मेलयित्वा दशगुरवः अभूवन् । अन्तिमगुरुः गुरुगोबिन्दसिंहानन्तरं गुरुपरम्परायाः परिसमाप्तिः जाता । तेन 9गुरुग्रन्थसाहिबः" इति ग्रन्थं गुरुरूपेण स्वीकर्तुम् एवमादेशः प्रदत्तः "सब सिक्खन को हुकुम है गुरु मानियो ग्रन्थ ‖ तदारभ्य गुरुग्रन्थसाहिबः गुरुरूपेण भक्त्या पूज्यते ।

गुरुः ज्ञानस्य स्रोतोऽस्ति । सैव ईश्वरस्य वाणीं प्रसारयति । गुरोः कृपां विना ज्ञानं नैव प्राप्यते । ज्ञानेन भक्तिमार्गः प्रशस्तः भवति । भक्तिं समाश्रित्य मोक्षप्राप्तिः जायते । सद्गुरोः मार्गदर्शनेन एतत्सर्वं सिध्यते । शिष्यस्य शिष्यः गुरोः आज्ञाकारी, भक्तश्च भवेत् । ईश्वरं प्रति विषये उक्तं वर्तते । तस्य प्रगाढः विश्वासः स्यात् । ईश्वरस्य कृपापात्रं भवितुं तस्य ध्यानं नामस्मरणं च कुर्यात् । प्रत्यहं नित्यकर्म कृत्वा सत्सङ्गनि कुर्यात् । शिष्यः जिज्ञासुः, आत्मसंयमी, आत्मशुद्धः च स्यात् । गुरुः उपदेशः





गृहणीयात् । सत्कर्म कृत्वा सांसारिकजीवनं यापयेत् । सदुपायेन धनोपार्जनं कृत्वा किञ्चित् दानमपि प्रयच्छेत् । मानवसेवाव्रतम् आचरेत् । सत्यभाषणं कुर्यात् सरलजीवनं च यापयेत् । शिष्यः भक्तेः शक्तेः च प्रतीकः भवति । एवं रीत्या गुरुशिष्ययोः समुचितसम्बन्धस्थापनेन परम्परायाः निर्वहणं भवति।

**अनुशासनम्** - प्रत्येकस्मिन् दर्शने अनुशासितजीवनं यापयितुम् अनुशासनम् अत्यावश्यकम् । अनुशासनेन शिक्षणव्यवस्था नियन्त्रिता भवति । सिक्खशिक्षादर्शने निम्नलिखिताः नियमाः परिपाल्यन्ते स्म । ते यथा -

१) सिक्खजनः "गुरुवाण्याः नित्यं (नीतिनेन) नाम स्मरणं कुर्यात् । गुरुवाण्याः गायनेन श्रवणेन च मनः प्रेम्णा पूर्णं भवेत् । पञ्चवाण्याः पाठः प्रत्युषे क्रियते । ताः च वाणयः क्रमशः जपजी, जापसाहिवः अमृतसवैया, चउपायि साहिबः, आनन्दसाहिबश्च भवन्ति । सन्ध्याकाले रेहरा" इत्यस्य गानं कर्तव्यम् । रात्रिकाले (शयनात् प्राक्) च नामसंकीर्तनं (सहिलाकीर्तन) करणीयम्।

२) कामः, क्रोधः, लोभः, मोहः, अहङ्कारादि पञ्चपापानां दूरीकरणम् अवश्यं करणीयम् ।

३) सत्यं, दया, सन्तोषः, नम्रता, प्रेमादि सद्गुणानां पालनं कर्तव्यम् ।

४) सत्कर्मणा धनोपार्जनं कृत्वा अर्जितधनस्य दशप्रतिशतं दानं कुर्यात् ।

५) सन्यासजीवनापेक्षया पारिवारिकजीवनयापनं करणीयम् ।

६) नामस्मरणं, नामजपं, ईश्वरस्य गानं (वाहेगुरुः) च अभ्यसनीयम् ।

७) एते त्रयः सिक्ख दर्शनस्य त्रयः स्तम्भाः भवन्ति । पञ्च 9क"काराणां शरीरे धारणम् ।

८) जाति-धर्म-वर्गनिर्विशेषेण गुरुद्वारे लंगरसेवा आचरणीया ।

९) सामूहिकभोजनव्यवस्थायां भागग्रहणं अन्यस्य सहाय्यं कर्तव्यम् ।

१०) साधुसङ्गतिरपि करणीया ।

११) मादकद्रव्याणां वर्जनं कर्तव्यम् ।

**विद्यालयः** - सिक्खदर्शने विद्यालयस्य स्पष्टचित्रं न दृश्यते । सिक्खदर्शनस्य मूलतत्त्वं सिक्खधर्मे

निहितं वर्तते । प्रारम्भिककाले सिक्खधर्मस्य आदिगुरुः नानकदेवः विभिन्नस्थानानि परिभ्रमणेन जनेभ्यः धर्मोपदेशं दत्तवान् आसीत् । तदनन्तरं धर्मस्य प्रचाराय प्रसाराय च स्थायीकेन्द्राणाम् आवश्यकता अभवत् । स्थायीकेन्द्रत्वेन मठानां धर्मशालानाञ्च निर्माणं जातम् । एतानि केन्द्राणि कालक्रमे विद्यालयरूपेण विकसितानि जातानि । कालान्तरे तस्य स्वरूपे परिवर्तनमपि सञ्जातम् । ततः परं विभिन्नस्थानेषु गुरुद्वाराणां निर्माणमभवत् । तत्रैव शिक्षाकेन्द्राण्यपि स्थापितानि । अधुना गुरुद्वारपक्षतः सम्पूर्णदेशे विदेशेष्वपि विद्यालयाः, महाविद्यालयाः, विश्वविद्यालयाः च सञ्चालिताः वर्तन्ते ।

## भारतं विश्वे विशिष्टं राष्ट्रं कर्त्तुं सम्भावनाः

**डाँ.गौराङ्गबाघः**

(सहाध्यापकः शिक्षाशास्त्रम् )

आर्-एस्-एस्-श्रीसदाशिवपरिसरः, पुरी

भारतं विश्वे जगद् गुरुः बभूव । सम्प्रति भारतस्य स्थितिः शोचनीयावर्त्तते विश्वेषु ।आर्थिकदृष्टया भारतस्य स्थानं सप्तमः । सैनिकसामर्थ्यदृष्टया चतुर्थस्थानम् । भारतस्य स्थानं सम्प्रति 'Rio' ओलोम्पिक्क्रीडायां दृष्टम् । १३० कोटिः भारतस्य जनसंख्या परन्तु पदकद्वयं तदपि महिले प्राप्तवत्यौ। प्रदूषणदृष्टया विश्वे दशप्रदूषितनगरीषु भारतस्य नगर्यौ भवतः । मानविकता दृष्टया भारतीयनगरीषु अद्यापि सहानुभूतिः केवलं चत्वारि प्रतिशतं दृश्यते ।उत्कोचरहितदृष्टया भारतस्य स्थानं ७८स्थाने (www.indian express. in 2018) वर्तते । भारतस्यग्रामेषु प्रतिवर्षं कश्चन जनः २९०० रूप्यकाणि उत्कोचरूपेण यच्छति । नगरेषु ४२०० (m.aajtak.in)रूप्यकाणि प्रदाय प्रतिवर्षं प्रत्येकं व्यक्तिःस्वकार्यं सम्पादयितुं यच्छति । जगति प्रायः १५ कोटिः जनाः आदिनं केवलम् एकवारमेव भोजनं प्राप्नुवन्ति तेषु चतुर्षु एकःभारतीयः भवति । भारते कर्कटरोगेण प्रतिदिनं १००००० जनाः मृताःभवन्ति (NDTV.feb 04/2018) । प्रतिवर्षं ५ लक्ष्यपरिमितं प्रति २० निमिषे एका महिला बलत्कृता भवति (Ajtak dece.18/2016) । मानविकता दृष्टया भारतस्य स्थानं १३०-१८८ । लैङ्गिकानुपातदृष्टया





भारतस्य स्थानं ११४ । उत्कोचदृष्टया ७६ तमस्थानं १७५ देशेषु । अस्वच्छधनं विदेशे सि.एच्.एफ् १९५ विलियन् ।स्वास्थ्यदृष्टया भारतस्य स्थानम् १०३ नभेम्वर २०१५ गणनानुसारं ।

उपयुक्ताः विषयाः साम्प्रतिकी भारतस्य स्थितिः का इति ज्ञातुं शक्यते । एतादृशी स्थितिः भारतस्य । यत्र अभावाः , समस्याः दृश्यन्ते तत्र प्रायः सम्भावनाः अपि दृश्यन्ते । सम्भावनायाः सफलार्थं दिग्दर्शनस्य आवश्यकता भवति । तदर्थं भारतीयसंस्कृतसाहित्ये वठः निर्देशाः अवलोक्यन्ते। निर्देशानां निर्देशाःअपि अवलोक्यन्ते । नैषधीयचरितस्य एकं पदं स्मर्यते यत् एकस्मिन्

पदे एव सम्भावनायाः सफलतां स्मारयति एव । तथा तस्य गूढ-रहस्यं प्रतिपादयति । तत् पदम्-"अधीतबोधचरणप्रचारणाः" इतिआदौ कार्यसिद्धिं चतुर्धा विभज्यते । प्रसङ्गः विद्यायाः सिद्धिः १. अधीतम् २. प्राप्तज्ञानम् ३. प्राप्तं ज्ञानं यथावत् स्व दैनन्दिनजीवने व्यवहारे आनयनम् । ४. स्वजीवने अनुभूतस्य अनुभवस्य हस्तान्तरणम् ।प्रथमपृष्ठायां वर्णिताः वठः समस्याः याः वर्तन्ते तासांसमस्यानां समाधानमेकस्मिन् विभागेन कर्तुं शक्यते सः विभागः भवति शिक्षाविभागः । कालिदासस्य सिद्धान्तानुसारं शरीरम् अस्माकं तदेवसाधनं वर्तते येन वयं यथेच्छं साधयितुं शक्नुमः ।' शरीरम् आद्यंखलु धर्मसाधनम् ।ठ प्लेटोऽपि सन्दर्भेऽस्मिन् स्वस्थे शरीरे स्वस्थं मनः, स्वस्थं शरीरं कर्तुं पतञ्जलिमहर्षिणा ' योगश्चित्तवृत्तिनिरोधःठइति चित्तस्य निरोधः "अभ्यासवैराग्याभ्यां तन्निरोधः" "तत्रस्थितौयत्नोऽभ्यासः ।।२३।।" श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वकइतरेषाम्।।२०।। कस्यापि कार्यस्य सिद्धये तत्र अविचलभावेन तस्मिन् निरतस्य कारणं श्रद्धा भवति निर्मलविवेकज्ञानस्य प्राप्तेः उपायाः –
योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ।।२८।।योगस्याष्टाङ्गानाम् आचरणेन चित्तस्य मलानि दूरीभवन्ति।चित्तं सर्वदा निर्मलं भवति । तेन आत्मनः स्वरूपं , बुद्धिः,

अहंकारेन्द्रियेषु सर्वथा भिन्नः प्रत्यक्षः दृश्यते ।

अष्टावङ्गानि -यमनियमासनप्राणायामप्रत्याहारधारणाध्यानम् -समादयोऽष्टावङ्गानि-

**क. यमाः-**

१. अहिंसा- मनसा- वाचा-शरीरेण च कस्मैः अपि चिन्मात्रमपि कदापि न दुःखप्रदानम् ।

२. सत्यम्- मनसा प्रत्यक्षम् अवलोक्य , श्रुत्वा अनुमानेन , अनुभूय च यथावत् भावप्रकटनं येन कस्मै अपि यथा उद्वेगः न भवेत् ।

३. अस्तेय - सर्वकारीय सेवाकरस्य , उत्कोचादीनां सर्वविधचौर्यस्य अभावः ।

४. ब्रह्मचर्य-मनसा, वाचा, कर्मणा च मैथुनत्यागः कर्मणामनसा वाचा सर्वावस्थासु सर्वदा सर्वत्र मैथुनत्यागीब्रह्मचर्यं प्रचक्षते ।

५. अपरिग्रहः-स्वस्वर्थाय श्रद्धापूर्वकं भौतिकसाधनानां संग्रहस्यअभावः ।

**ख. नियमः**-शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः ।३२।

१. शौचः-जलमृत्तिकादिभिः शरीरवस्त्रगृहादीनां शुद्धिकरणंबाह्यशौचः भवति । वर्णाश्रमे योग्यतानु न्यायपूर्वकं धनोपार्जनं शास्त्रानुकूलं शुद्धभोजनादिसेवनं सवैः सह यथा योग्यं व्यवहारःआन्तरीकशौचः

२. सन्तोषः- कर्मस्य कत्तव्यस्य च पालनपूर्वकं प्रारब्धानुसारं यत्प्राप्तं यत् न प्राप्तं सर्व सन्तुष्टिः कस्याः अपि कामनायाःतृष्णायाः वा अभावः सन्तोषः ।

३. तपः- स्ववर्णानुसारम्, आश्रमपरिस्थितियोग्यतानामनुसारेणस्वधर्मपालनपूर्वकं शारीरि मानसिकी कष्ठानां सहकर्षं स्वीकारः एव तपः । निष्कामभावेन तपसः पालनेन मनुष्यस्यअन्तःकरण अनायासेन शुद्धं जायते ।

४. स्वाध्यायः- यैः शास्त्रैःकर्त्तव्याकर्त्तव्ययोः बोधः जायेत तादृशाणां शास्त्राणां वेदादीना अध्ययनम् ।भगवतः अथवागुरुप्रदत्तमन्त्रस्य जपःस्वाध्यायः उच्यते ।

५. ईश्वरप्रणिधानम्- ईश्वरशरणापन्नमेव । ईश्वरस्य श्रवण-मनन- कीर्त्तन-समस्तकर्मणां भगवति समर्पणम् । तस्मिन् अनन्यप्रीतिःश्रद्धा एव ईश्वरप्रणिधानम् ।

**ग. आसनम्**- स्थिरसुखम् आसनम् । हठयोगे आसनानां बहवः भेदाः उद्धृताः वर्त्तन्ते पतञ्जलिना उक्तानाम् आसनानां प्रयोगः रामदेवद्वाराअस्माभिः अवलोक्यंते क्रियते च । शरीरं स्वस्थ कर्तुं मुख्यं साधनम् ।

**घ. प्राणायामः**- तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः । प्राणवायोःशरीरे प्रवेशः श्वासः बहिरागमनं प्रश्वासः ।प्रवेशननिष्कमणयोःअवरुद्धः प्राणायामः ।' धारणासु च योग्यता मनसः ठप्राणायामाभ्यासेन मनसि धारणायाः योग्यता अपि आयाति ।

**ङ. स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः** ।५४ ।प्राणायामस्य अभ्यासेन मनः इन्द्रियाणि च शुद्धानि जायन्ते ।ततः इन्द्रियाणां वाह्यवृत्तेः सर्वविधरूपेण मनसि एव विलीनस्यअभ्यसनं प्रत्याहारः भवति ।





**च. धारणा**- देशबन्धश्चित्तस्य धारणा।।१ ।शरीराभ्यन्तरे वाह्ये वा कस्मिन् अपि स्थले चित्तस्य स्थिरीकरणं धारणा भवति ।आभ्यन्तरे- नाभिचक्रे, हृदयकमलादिपु ।बाह्यः- सूर्य-चन्द्रमादिपु ।

**छ. ध्यानम्** - तत्र प्रत्ययैकतानता ध्यानम् ।।२ ।यस्मिन् चित्तस्य स्थिरीकरणं, तत्रैव चित्तस्य एकाग्रता तावत् आभ्यन्तरे न कस्याः अपि अपशयाः वृत्तेः ध्यानम् ।उपयुक्ता शिक्षा शिक्षाव्यवस्थायां केवलं सैद्धान्तिकमात्रं विलसति न प्रायोगिकपक्षः प्रतिक्षणं वातावरणं परिवर्त्तते । वातावरणेन वयं प्रभाविताः भवामः । तथा च वातावरणम् अस्माभिः प्रभाव्यते ।वातावरणंतथा निर्मातव्यं येन पश्चात् काले वातावरणं लोकोपयोगी भवेत् ।दशसहस्त्राणि वर्षाणि एकवर्गः वञ्चितः शोषितः भवति । एकस्मात् अधिकारात् चेत् का स्थितिः भवति ? अद्यापि संस्कृतज्ञेषुकश्चित् यदि नूतनं किञ्चित् कर्तुमिच्छति एवं च यदि सः वञ्चितवर्गस्य भवति चेत् न अङ्गीक्रियते ।यदि अस्माभिः गुरुकुलपरम्परायां यमनियमादिविषयान्प्रयोगिकरूपेण ,व्यवहारिकरूपेण , क्रियात्मकरूपेण आनयामःचेत् अध्ययनरतेषु छात्रेषु एतादृशम् अनुशासनम् सम्पादयितुंशक्नुमः । अस्माकमध्यापकानां साम्प्रतिकीस्थितिः कथनम् अन्यत् व्यवहारः अन्यः । पुरतः एकविधं पृष्ठतः अन्यविधं ।

***सन्दर्भाः ग्रन्थाः च***


1. www.indian express. in 2018
2. m.aajtak.in
3. NDTV.feb04/2018
4. Ajtak dece.18/2016
५. यमनियम......ध्यानम् ।(पतञ्जलियोगदर्शनम्)
६. अधीतबोधचरणप्रचारणाः(नैषधीयचरितम्)

# अध्यापकस्वायत्ततायाः अवधारणा

डॉ. सुशान्तहोता
प्राध्यापकः ( शिक्षाशास्त्रविभागः)

एकविंशशताब्द्याम् अध्यापकस्वायत्ततायाः सन्दर्भे शिक्षाशास्त्रिणां, शिक्षाधिकारिणां, नीतिनिर्माणकर्त्तृणाम्, अनुसन्धातृणां प्रशासनिकानाञ्च मस्तिष्के नैकानि चिन्तनानि स्फुरितानि जायन्ते। अध्यापकस्वायत्ततायाः विषये चिन्तनं चर्च्चां च विधातुम् राष्ट्रियस्तरे अन्ताराष्ट्रियस्तरे च सङ्गोष्ठ्यादीनामपि आयोजनं विहितं वर्त्तते। शिक्षाव्यवस्थायां गुणवत्तां सम्पादयितुम् अध्यापकेषु विद्यमानानां विविधानां ज्ञान-कौशल-चिन्तन-अभिवृत्ति-उत्तरदायित्व-सर्जनात्मकता-प्रभावात्मकतादीनां चर्च्चासन्दर्भे अध्यापकस्वायत्ततायाः समीक्षात्मकं चिन्तनं विद्वद्भिः क्रियते। अध्यापकस्वायत्तताम् अवगन्तुम् अस्माभिः आदौ स्वायत्ततायाः अर्थः ज्ञातव्यः।

**स्वायत्ततायाः अर्थः-(Meaning of Autonomy)**

सम्प्रति शिक्षाव्यवस्थायां स्वायत्तता एकः महत्त्वपूर्णः विषयः वर्त्तते। स्वायत्ततायाः सम्प्रत्ययाः विद्वद्भिः वहु विमृष्टाः विद्यन्ते। स्वायत्तता इत्यस्य मूलशब्दः भवति स्वायत्तः। स्व आयत्तः इत्यनयोः द्वयोः पदयोः समाहारेण स्वायत्तः इति पदं निष्पद्यते। स्वस्य अधीने स्थापितः इत्यर्थः। स्वायत्तस्य भावः स्वायत्तता। पुनश्च स्वतन्त्रता इति अनेन शब्देन सह अस्य शब्दस्य साक्षात् सम्बन्धः। कथनस्य तात्पर्यमेतत् यत् यदा कश्चन अध्यापकः पूर्णस्वतन्त्रतया स्वयोग्यतानां प्रयोगं कृत्वा कार्याणि कर्त्तुं सन्नद्धः भवति तदानीं तत्र स्वायत्तता इति पदं युज्यते। एतादृशः अध्यापकः स्वायत्तः अध्यापकः इति ज्ञायते। स्वायत्ततायाः सर्वसामान्यम् अर्थं वयम् एवं वक्तुं शक्नुमः यत्-

Autonomy may be defined as the responsibilities, awareness of one's needs, motivation, critical reflection, self evaluation and some levels of evaluation.

अर्थात् एकस्य व्यक्तिविशेषस्य आवश्यकतानां कृते उत्तरदायित्वं, जागरुकतावलम्बनम्, अभिप्रेरणं, समीक्षात्मकं प्रतिविम्बनम्, आत्ममूल्याङ्कनं, मूल्याङ्कनार्थं विविधानां स्तराणां ज्ञानं स्वायत्तता इति ज्ञायते। पुनरपि उक्तं यत् स्वायत्ततायाः विषये-

Autonomy might be defined as the ability to developed appropriate skills, knowledge and attitudes for oneself as a teacher.





अर्थात् एकस्मिन् व्यक्तिविशेषे उपयुक्तकौशलानां, ज्ञानानाम्, अभिवृत्तीनां विकासाय योग्यता स्वायत्तता इति ज्ञायते। अतः अत्र अस्माभिः ज्ञातं यत् स्वयोग्यतानुरूपं स्वनिर्देशितानां कर्मणाम् अनुसारं कार्यसम्पादनमेव स्वायत्तता भवति।

**अध्यापकस्वायत्ततायाः अर्थः (Meaning of Teacher Autonomy)-**

शिक्षणाधिगमप्रक्रियायां यदा एकः अध्यापकः शिक्षासंस्थायां पाठयति तदानीं वहूनां मस्तिष्केषु एतादृशाः नैके प्रश्नाः समुत्पद्यन्ते। ते यथा-

अध्यापकः विद्यालये किं पाठयति ?

अध्यापकः विद्यालये कथं पाठयति ?

अध्यापकः विद्यालये अन्यानि कार्याणि कथं सम्पादयति ?

उपर्युक्तानाम् एतेषां प्रश्नानां याथार्थ्यं स्पष्टीकर्त्तुं विचाराः उपस्थापयन्ते। यथा-

- केचन विद्यालयाः सम्पूर्णरीत्या अध्यापकैरेव सञ्चालिताः भवन्ति। सर्वमपि प्रवन्धकीयम् उत्तरदायित्वम् अध्यापकानाम् एव भवति।
- केषुचित् विद्यालयेषु काचित् समितिः सर्वाः शिक्षणव्यवस्थाः सञ्चालयति।
- केचन विद्यालयाः सर्वकारीयनियन्त्रणेन सञ्चाल्यन्ते।
- कुत्रचित् विद्यालयेषु राजनेतृणाम् अधिकारः दृश्यते।
- कुत्रचित् अन्येषां व्यक्तिविशेषाणाम् अधीने स्थित्वैव अध्यापकाः कार्यं कुर्वन्ति।

एवं प्रकारेण अत्र शिक्षाव्यवस्थायाः प्रबन्धनस्य च वैभिन्यम् अध्यापकस्वायत्ततां स्वतन्त्रतां च विनश्यति येन शैक्षिकगुणवत्तायां ह्रासोऽपि भवति। अध्यापकस्वायत्ततायाः अर्थम् अत्र विचारयामः।

अर्थः - विद्वांसः अध्यापकस्वायत्ततायाः अर्थं स्पष्टीकर्त्तुं वदन्ति यत्- Teacher Autonomy refers to teacher's ability and willingness to help learners take responsibility for their own learning. अर्थात् अध्यापकस्वायत्तता अध्यापकानां योग्यताम् इच्छाशक्तिं च प्रतिपादयति येन सः अध्यापकः अधिगन्तृणां शैक्षिकविकासाय सर्वमपि उत्तरदायित्वं स्वेच्छया स्वीकरोति। अत्र अध्यापकानां सर्वाः भूमिकाः छात्राणाम् अधिगमे प्रतिविम्बिताः भवन्ति। David Littleमहोदयस्य भाषया यथा-

The teacher autonomy define as the capacity to engage the self directed teaching learning process or action.

अर्थात् स्वनिर्देशितशिक्षणाधिगमप्रक्रियायाः कार्याणाञ्च सञ्चालनयोग्यता अध्यापकस्वायत्तता इति कथ्यते। अनया परिभाषया अत्र एतत् ज्ञायते यत्- शिक्षणव्यवस्थायाः प्रभावात्मकता, समग्रं शैक्षिकं सहशैक्षिकञ्च उत्तरदायित्वं, शैक्षिकप्रक्रियायाः संज्ञानात्मकं नियन्त्रणं सञ्चालनञ्च अध्यापकानाम् एव उत्तरदायित्वं भवति। अध्यापकाः आत्मनिर्देशिताः सन्तः सर्वाणि कार्याणि सम्पाद्य शैक्षिकविकासं साधयन्ति।

**विविधेषु अर्थेषु अध्यापकस्वायत्ततायाः व्यवहारः (Different uses of the term Teacher Autonomy)-**

स्वायत्तता इत्यस्य पदस्य स्वतन्त्रता इति पदेन सह साक्षात् सम्बन्धः। अत्र स्वतन्त्रता नाम परतन्त्रतायाः अभावः। अध्यापकः यत् इच्छति तत्सर्वं कर्तुं सः समर्थः भवति। तस्मात् शिक्षणव्यवस्थायां गुणवत्तामानेतुं कार्यसम्पादने सः स्वतन्त्रः भवेत्। शिक्षणपरिस्थितौ अन्तःक्रियासु वाञ्छितक्रियासु यदा अध्यापकः स्वतन्त्र भवति तदानीं सः स्वायत्तशिक्षकः इति अभिहितः भवति। शैक्षिकवातावरणनिर्माणाय छात्राणाम् आवश्यकतापरिपूर्त्यै च अध्यापकेषु स्वायत्तता अत्यन्तम् अपेक्ष्यते।विविधेषु अर्थेषु अध्यापकस्वायत्ततायाः अर्थः शिक्षाशास्त्रिभिः इत्थं प्रयुक्तः भवति। यथा-

१. Capacity for self directed professional action

(स्वनिर्देशित-व्यावसायिककार्यसम्पादनयोग्यता)

अत्र स्वायत्तः अध्यापकः पाठ्यचर्यायाः पाठ्यविषयाणां च समीक्षात्मकचिन्तनेन, प्रभावात्मकं संज्ञानात्मकञ्च नियन्त्रणेन सर्वाणि कार्याणि सम्पादयितुं शैक्षिकविकासस्य समग्रं व्यावसायिकम् उत्तरदायित्वम् आत्मनिर्देशितः सन् स्वयमेव निर्वहति।

२. Capacity for self directed professional development

(स्वनिर्देशित-व्यावसायिकविकाससम्पादनयोग्यता)-

अत्र स्वायत्तः अध्यापकः आत्मनिर्देशितः सन् शिक्षणाधिगमप्रक्रियायाः सञ्चालनकाले कदा, कुत्र, किमर्थम्, केन उपायेन शिक्षणकौशलानां, विधीनां, युक्तीनां च प्रयोगं कृत्वा व्यावसायिकविकासः सम्पादनीयः भवति तस्मिन् विषये जागरुकः भवति।

३. Right to freedom from control by others over professional development or action





(अन्येषां नियन्त्रणात् बाह्यनियन्त्रणात् वा मुक्तः सन् व्यावसायिकविकासः तथा व्यावसायिक-विकाससम्पादनम् )-

अत्र स्वायत्तः आत्मनिर्देशितश्च अध्यापकः अन्येषां नियन्त्रणात् बाह्यनियन्त्रणात् वा मुक्तः सन् व्यावसायिककार्याणि व्यावसायिकविकासञ्च सम्पादयति। अन्येषां हस्तक्षेपः यदा न भवति तदानीं सः सौकर्येण कार्यं विकासञ्च सम्पादयितुं सन्नद्धः भवति।

**कक्षाशिक्षणे अध्यापकस्वायत्ततायाः व्यवहारः(Use of Teacher autonomy in classroom teaching)-**

एकस्मिन् कक्षाशिक्षणे एकः अध्यापकः अध्यापकस्वायत्ततायाः व्यवहारं प्रकारत्रयेण एवं प्रकारेण करोति। यथा-

१. Capacity for self directed teaching (स्वनिर्देशितशिक्षणयोग्यतायै )

२. Freedom from control by others over his teaching ( अन्येषां नियन्त्रणात् मुक्तः सन् शिक्षणम्)

३. Capacity for self directed teacher learning (अधिगन्तृषु अपि स्वायत्ततायाः विकासाय )।

अध्यापकाः स्वयोग्यतानां प्रयोगं कृत्वा छात्रेभ्यः सूचनाः प्रददति। परन्तु अध्यापकानां कार्यं केवलं सूचनाप्रदानपर्यन्तं सीमितं निस्ति। सूचनाप्रदानेन सह ते अन्यानि अपि बहुनि सहशैक्षिककार्याणि साधयन्ति। एतानि कार्याणि अतिरिच्य ते स्वाधिकाराणां योग्यतानाञ्च समुचितं प्रयोगं कृत्वा उच्चाधिकारिभिः प्रशासकैश्च सह वार्त्तां सम्पाद्य शिक्षणव्यवस्थायां विकासम् आनेतुं समर्थाः भवन्ति। अतः सर्वासामपि विद्यालयीयगतिविधीनां साप्ताहिक-पाक्षिक-मासिक-वार्षिकयोजनानां समीक्षाणां च निर्माणाय अध्यापकानाम् अपि स्थानं योगदानञ्च भवेत्। शिक्षणे प्रशिक्षणे च अधिकाधिकं शिक्षणोपकरणानाम् उपलब्धिः यथा स्यात् तदर्थं मतानि उपस्थापयेयुः। अनेन प्रकारेण नियन्त्रणमुक्तवातावरणे स्वायत्ततायाः विकासेन सह अधिगन्तृषु अपि स्वायत्ततायाः विकासः सम्भवति।

**अध्यापकस्वायत्ततायाः उपादानानि ( Elements of Teacher autonomy) -**

अध्यापकस्वायत्ततायां विकासं सम्पादयितुं मुख्यतया अधोलिखितानि उपादानानि शिक्षाशास्त्रिभिः उक्तानि। एतानि अध्यापकस्वायत्ततायां सर्वदा सन्निहितानि दृश्यन्ते। यथा-

१. जागरुकता (Awareness)

२. उत्तरदायित्वम् (Responsibility)

३. अभिप्रेरणम् (Motivation)

४.समीक्षात्मकं प्रतिविम्बनम् (Critical Reflection)

५. स्वमूल्याङ्कनम् (Self evaluation)चेत्यीदीनि। एतानि उपादानानि अध्यापकस्वायत्ततायां गुणवत्ताम् उत्पादयन्ति। अध्यापकः आत्मनिर्देशितः सन् सर्वाणि उपादानानि मनसीकृत्य कार्यं सम्पादयेत्।

एवं प्रकारेण अत्र अध्यापकस्वायत्तता विविधेषु अर्थेषु व्यवहारेषु च संचर्च्चिता। शिक्षाप्रणाल्याम् अस्याः अध्यापकस्वायत्ततायाः स्थानम् अत्यन्तं महत्त्वपूर्णं वर्त्तते। अनया विद्यालयस्य तात्कालिकं जीवनं प्रभावितं भवति, विद्यालयीया संस्कृतिः समुन्नता च जायते। अध्यापकेषु समानतायाः, पारस्परिकसम्मानस्य च भावना विकसति। अतः शिक्षाव्यवस्थां सम्यक् सञ्चालयितुं सर्वैः अध्यापकैः, प्रशासकैः प्रवन्धकैः, अधिकारिभिश्च अस्याः महत्त्वं स्वीकर्त्तव्यम्। वयमपि अस्याः स्वरूपस्य ज्ञानेन एव शैक्षिकोद्देश्यानि साधयितुं शक्नुमः।

*सन्दर्भग्रन्थसूची-*


१. यादव सियाराम, पाठ्यक्रम विकास, अग्रवाल पब्लिकेशन्स, आगरा।

२. मदान पूनम, पाठ्चर्या के सैद्धान्तिक आधार, अग्रवाल पब्लिशर्स, आगरा।

३. पाठ्यचर्या एवं अनुदेशन, इन्दिरागान्धी मुक्त विश्वविद्यालय, २००८।

४. https://wikivisually.com/lang-hi/wiki/पाठ्यचर्या ।

५. www.ncert.nic.in/rightside/links/pdf/framework/ncf-hindi-२००५.






# संस्कृतभाषामाहात्म्यम्


**श्रीचिन्तामणिकालोकनिष्ठप्राध्यापकः**

सर्वकारीयमहिलामहाविद्यालयः, बलाङ्गीर, ओडिशा


संस्कृतसाहित्यमत्यन्तं व्यापकम्। मानवसभ्यतायाः सर्वाणि उपादेयोपादानानि सर्वाङ्गपरिपूर्णरीत्या अत्र सन्निवेशितानि। केचन सङ्कीर्णमनोभावयुक्ताः समालोचकाः संस्कृतसाहित्यं धर्ममूलकं मोक्षप्रदायकं साहित्यमिति अभिप्रैन्ति। परन्तु नैतत् सत्यम्। कारणं भौतिकजीवनस्य सर्वमैश्वर्यमत्रोपवर्णितम्। मानवजीवनस्य सर्वमेव दैनन्दिनकार्यमनेन संस्कृतसाहित्येन एव नियन्त्रितम्। वास्तवतः येन भाषासाहित्येन विश्वस्य सर्वाः भाषाः दिगृदर्शनं प्राप्तवत्यः सा भवति निर्मला पवित्रान्तःकरणा संस्कृतभाषा। विशिष्टः ऐतिहासिकः Winternitzमहोदयः भाषते – "If we wish to Learn, to understand the beginnings of our own culture , If we understand the oldest Indo-European culture we must go to India, where the oldest Literature of an Indo-European people is preserved." इति। अतः एतादृशस्य संस्कृतभाषासाहित्यस्य माहात्म्यमधः आलोच्यते। तत्रादौ –

**१.सांस्कृतिकमहत्त्वम् -**

**संस्कृतं संस्कृतेर्मूलं ज्ञानविज्ञानवारिधिः।**
**वेदतत्त्वार्थसंजुष्टं लोकाऽऽलोककरं शिवम्।। इति।।**

विविधालौकिकज्ञानविज्ञानवेदार्थतत्त्वसंयुक्तं संस्कृतं भवति सर्वेषां संस्काराणां सर्वासां संस्कृतीनां च मूलम्। संस्कृतमेतत् न केवलं सांस्कृतिकमहत्त्वं विधत्ते अपि तु स्वयमेव संस्कृतिर्भवति। गर्भाधानादारभ्य अन्त्येष्टिक्रियापर्यन्तं क्रियमाणाः सर्वे संस्काराः संस्कृतेन एव मार्गिताः। किञ्च संस्कृतेः संरक्षणाय सर्वेऽपि संस्कृतभारत्याः शरणं गच्छन्ति। संस्कृतिः प्रतिसमाजम्, प्रतिवर्गम्, प्रतिप्रदेशञ्च भिद्यते। तथापि सर्वेषु वर्णेषु सर्वस्मिन् समाजे च सा संस्कृताधारिता भवति। संस्कृतभाषायामेव भारतस्य सांस्कृतिकविचाराः, नैतिकाऽऽदर्शाश्च सन्निविष्टाः सन्ति। भारतीयसंस्कृतौ समाहिताः एते उच्चादर्शाः एव अस्माकं भारतं विश्वगुरुपदेन अलङ्कुर्वन्ति। संस्कृताऽऽयोगस्य प्रतिवेदने उल्लिखितमस्ति यत् भारतीयसभ्यता वैदिककालादारभ्य चतुस्सहस्रवर्षाणि यावत् संस्कृतभाषयैव स्वाभिव्यक्तिं प्रदर्शितवती। साम्प्रतं भारते सर्वत्र नैतिकमूल्यसभ्यतासंस्कृत्यादीनां ह्रासः आलोक्यते। सांस्कृतिकैकता च विनाशं गच्छति। सन्दर्भेऽस्मिन् संस्कृतेनैव सांस्कृतिकैकता संरक्षिता भविष्यति।

२. धार्मिकमहत्त्वम् -

साम्प्रतिकसमये धर्मशब्दः सङ्कुचितार्थे व्यवह्रियमाणः अस्ति। Religion इति अस्य धर्मशब्दस्य आङ्ग्लभाषायां व्यवहारः। परन्तु प्राचीनभारते शब्दोऽयं महान्तं व्यापकार्थं निर्दिशति स्म उपयुक्तदिनचर्यानैतिकताऽऽचारविचारमूल्यानि धर्मशब्देन अभिहितान्यासन्। आचारो परमो धर्मः स्वधर्मे निधनं श्रेयः, धर्मो रक्षति रक्षितः, वेदोऽखिलो धर्ममूलम् इत्यादिषु सुक्तिषु धर्मशब्दः विविधेषु अर्थेषु प्रयुज्यते। एवं विविधानां वैदिकमन्त्राणां सम्यक् पर्यालोचनेन धर्मशब्दः आध्यात्मिकविचारान् सात्त्विकभावान् भृशं सूचयति इति प्रमाणानि समुपलभ्यन्ते।

यद्यपि अस्माकं भारते धर्म इति शब्दोऽयम् आस्तिकनिकाये प्रयुज्यते तथापि धारणात् धर्मः इति व्युत्पत्त्यनुसारं जनाः यं कमपि धर्ममाश्रित्य तिष्ठन्तः दृश्यन्ते। सामान्यतः सनातनधर्मः एव सर्वप्रमुखः मन्यते। सनातनधर्ममाधृत्य संरचिताः वेदाः, उपनिषद्-पुराण-इतिहास-रामायण- महाभारतप्रभृतयः देशेऽस्मिन् धार्मिकपठनपाठनप्रक्रियायां सततमाश्रियमाणाः राजन्ते। वस्तुतः भारते धार्मिकजीवनं संस्कृतिनिष्ठसंस्कृतेनैव पूर्णतां प्राप्नोति।

**३. ऐतिहासिकमहत्त्वम् -**

संस्कृतसाहित्याङ्गभूतेषु वेदोपनिषद्पुराणादिषु ग्रन्थेषु प्राचीनभारतस्य इतिहासः सन्निहितः। न केवलं वैदिकवाङ्मये अपि तु रामायणमहाभारतत्रिपिटकादिवौद्धसाहित्यजैनसाहित्यादयः ग्रन्थाः इतिहाससंयुक्ताः। किञ्च तात्कालिकप्राचीनभारतस्य सभ्यतासंस्कृतिधर्माचारव्यवहाराः तात्कालिकसमाजस्य राजनैतिक्यः सामाजिक्यश्च व्यवस्थाः सम्यक् प्रतिपादिताः सन्ति।

**४. साहित्यिकमहत्त्वम् -**

साहित्यं समाजस्य दर्पणः। समाजे यत् किमपि कार्यं क्रियते तत् साहित्येन एव प्रतिविम्बितं जायते। तस्मात् एव कारणात् साहित्यिकाः समाजे पूजिताः। कथ्यते यत् -

**साहित्यसङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविशाणहीनः।।इति।।( नी.श. - १२)**

साहित्यं विहाय संसारस्य, संसारं विहाय साहित्यस्य स्थितिः नास्त्येव। प्रपञ्चेऽस्मिन् संस्कृतसाहित्यस्य यावान् विकासः परिलक्ष्यते न तथा इतरसाहित्यानाम्। अपि च संस्कृतसाहित्ये विविधैरालङ्कारिकैः सूक्ष्मातिसूक्ष्मविचाराः यावन्तः विचारिताः विद्यन्ते, न तथा संस्कृतेतरसाहित्येषु अवलोक्यते। विविधलक्ष्यलक्षणग्रन्थानाम् आविर्भाववशात् संस्कृतभाषा स्वतन्त्ररीत्या तार्किकशैल्या स्वाभिप्रायं प्रकटय्य संस्कृतसाहित्यस्य महिमानं सम्वर्धयति। पुनश्च गद्यपद्यचम्पूनाटकनीतिकथासुक्तिभण्डागारैः संयुक्तं





संस्कृतसाहित्यं विश्वस्य सर्वाणि साहित्यानि अतिशेते। अतः विदेशेषु विद्यमानेषु विश्वविद्यालयेषु संस्कृतसाहित्यस्य संस्कृतभाषायाश्च तुलनात्मकमध्ययनं संप्रवर्त्तते। अयमेव प्रचारः संस्कृतसाहित्यस्य समृद्धिं संसाधयति।

५. राष्ट्रियमहत्त्वम् -

**अभिवर्त्तेन मणिना येनेन्द्रो अभिवावृधे।**
**तेनास्मान् ब्रह्मणस्पते अपि राष्ट्रस्य वर्धय ।।इति।।** ( अथर्व - १.२९.१)

इत्थं सम्पूर्णस्य राष्ट्रस्य विभिन्नानामङ्गानामभिवृद्धये, राष्ट्रस्य समुन्नतये च वैदिकऋषिभिः प्रार्थना कृता। अद्यापि राष्ट्रेऽस्मिन् एतादृशी प्रार्थना अपेक्षते। संस्कृतवाङ्मये राष्ट्रियैकतायाः चित्रं तत्र तत्र भृशं वर्णितं विद्यते। वायुपुराणस्य सुप्रसिद्धश्लोकोऽयं भारतस्य अखण्डं सूचयति। यथा -

**उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।**
**वर्षं तत् भारतं नाम भारती यत्र सन्ततीः।।इति।।( वायुपुराणम्)**

किञ्च सत्स्वपि विविधबाह्यभेदेषु सर्वे भारतमातुः सन्ततयः अर्थात् भारतीयाः इति अभिहिताः। इत्थम् इयं सुरभारती भारतस्य अखण्डतां वर्द्धयन्ती सति भारतभारतीति विराजते। यद्यपि इयं विश्वभारती तथापि संस्कृतवाङ्मये सर्वप्रथमतया प्रासङ्गिकरुपेण राष्ट्रियैकतामेव बोधयति। तदुक्तम् -

**समानी वः आकूतिः समाना हृदयानि वः ।**
**समानमस्तु वो मनः यथा वः सुसहासति।।**
**समानो मन्त्रः समितिः समानी समानं मनः सहचित्तमेषाम्।**
**समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि।।इति।।**

(ऋक्.- १०.१९१.३)

एवं भारते आचार-विचार-सद्व्यवहार-आध्यात्मिकचिन्तन-दर्शन-धर्मप्रभृतयः प्रतिप्रान्तं प्रवर्धिताः, समानभावनया एकात्मकचिन्तनेन च प्रेरिताः सन्तः संस्कृतमेव समाश्रित्य राष्ट्रस्य एकतां संबर्द्धयन्ति।

**६. अन्ताराष्ट्रियमहत्त्वम् -**

भारतमातुः दृष्टिः सर्वदा विश्वव्यापिका अन्तराष्ट्रियमहत्त्वयुता सति लीलायते। भारतमाता स्वदैवीवाण्या संस्कृतभाषया एव स्वाभिप्रायं सकलजगतः कृते प्रकटयति। अस्यां भाषायां विद्यमानाः सर्वेऽपि उत्तमोत्तमाः विचाराः राष्ट्रियस्तरे अन्ताराष्ट्रियस्तरे च प्रशंसामर्हन्ति।

वसुधैव कुटुम्बकम्, त्रैलोक्यं मङ्गलं कुरु, अयमात्मा ब्रह्म, उदिते परमानन्दे नाऽहं न त्वं न वै जगत् इत्येतानि सार्वभौमिकानि सार्वकालिकानि च सत्यानि सर्वेषां विश्वजनानां कृते आविष्कृतानि। किञ्च आ नो भद्राः क्रतवो यन्तु विश्वतः (८.८९.१) इति ऋग्वेदोक्तं वाक्यमिदं ईस्लर्त महोदयः ठथ्ू न्दांत् प्द्लूे म्दस् ू द ल्ेंदस् नि्ॆग्.ठ इति एवम् अनुवादं कृत्वा स्वकीयं मन्तव्यं प्रदत्तवान् यत् इदमेव वाक्यं सम्पूर्णप्रपञ्चस्य मार्गनिर्देशकः अस्ति।

सम्प्रति संस्कृतसाहित्यपारावारे विद्यमानानां एतादृशानां सूक्तिरत्नानां यथावदनुपालनेन विश्वे पारस्पारिकः अन्तर्द्वन्द्वः, कलहः, देशानां मध्ये संघर्षश्च इत्येते सर्वे समूलं दूरीकृताः भवेयुरिति नास्ति सन्देहः । तस्मात् मनुना उक्तम् –

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।। इति।।** ( मनु.– २.७)

एवं प्रकारेण संस्कृतभाषायाः महत्त्वानि सर्वलोकविश्रुतानि वर्त्तन्ते।

*सन्दर्भग्रन्थसूची-*


१. त्रिवेदी पण्डित रामगोविन्द – ऋग्वेद-संहिता- चौखम्वा विद्याभवन वाराणसी – १९९१
२. त्रिपाठी डॉ. रमाकान्त, अनुवादरत्नाकरः, वाराणसी,चौखम्बाविद्याभवनम्,२००१
३. त्रिपाठी डॉ. श्रीकृष्णमणि – भर्तृहरिशतकत्रयम् – चौखम्वा विद्याभवन, वाराणसी – २००८
४. द्विवेदी कपिलदेव, संस्कृतनिबन्धशतकम्, वाराणसी, विश्वविद्यालयप्रकाशनम्, २००४
५. नलचक्रवर्ति कानाल, संस्कृताध्यापनम्, वेङ्कटाम्बा पब्लिकेशन्स, तिरूपतिः, १९९६
६. पाण्डेय डॉ. सोहनलाल, शिक्षणस्यायोजनप्रविधिः, अक्षरप्रकाशनम्, जयपुर,२००७
७. वेदालङ्कार आचार्य जयदेव – वैदिक दर्शन – भारतीय विद्या प्रकाशन, वाराणसी – १९९१
८. शर्मा सि.एल्.एन् एवं फतेह सिंहः, संस्कृतशिक्षणविधिः, भारतमुद्राप्रकाशनम्, पुरनाट्टुकरा, त्रिचुर, केरला, १९९६






# EDUCATIONAL RESEARCH


**Archana Manjari Pradhan**
Shiksha Acharya (1st year)


Research comprises "creative and systematic work undertaken to increase the stock of knowledge, including knowledge of human, culture and society, and the use of this stock of knowledge to device new applications".

## Educational Research–

Educational Research refers to the systematic collection and analysis of data related to the field of education.\

Research may involve various aspects of education including student learning, teaching methods, teacher training and classroom dynamics.

## Nature of Educational Research –

Educational research refers to a systematic attempt to gain a better understanding of the educational process.

It is an application of scientific method to the study of educational problems

## Purpose of the Educational Research –

The purpose of educational Research is to develop new knowledge about the teaching – learning situation to improve educational practice.

## Importance of Educational Research –

Educational research is important because of contributing knowledge development, practical improvement and policy information.

Therefore, educators can use those research finding to improve their competences and teaching and learning process.

**General Types of Educational Research –**

1. Descriptive – survey, historical, content, analysis.
2. Associational – correlational, casual comparative.
3. Intervention – experimental, action research.

**Steps of the Research Process –**

1. Identify the problem.
2. Review the literature.
3. Clarify the problem.
4. Clarify define terms and concepts.
5. Define the population.
6. Develop the instrumentation plan.
7. Collect data.
8. Analysis the data







# आनुवंशिकतावातावरणयोः अन्तःक्रिया

**देवराज त्रिपाठी**
शिक्षाचार्यः (द्वितीयवर्षम्)

प्रस्तावना–

प्राणीनां विकासः एवं व्यवहारस्य अध्ययनसमये मनोवैज्ञानिकैः प्रमुखकारकद्वयं प्रति बलं दीयते । कारकद्वयस्य नाम भवति– वंशानुक्रमः वातावरणं च। यत्र वंशानुक्रमः जन्मजातः तथा प्रकृतिजन्यः भवति, तत्र वातावरणम् उभयं प्रभावयति । पित्रोः अनेकेगुणाः तयोः सन्ताने परिलक्षितः भवति। वास्तविके बालकः स्वस्य पितृभ्यः अनेके शारीरिका– मानसिका– सामाजिका– संवेगात्मिकात्मान् अनेकान्विचारान् प्राप्नोति । प्राय दृश्यते यत् बुद्धिमान् पित्रोः सन्तानं बुद्धिमान् भवति, एवं स्वल्पबुद्धियुक्त पित्रोः सन्तानं स्वल्पबुद्धियुक्तः भवति । केचन विद्वांसः वंशानुक्रमं, तथा केचन विद्वांसः वातावरणम् अधिकं महत्त्वपूर्णं मन्वते । जैविकमनोवैज्ञानिकाः वंशानुक्रमम् अधिकं महत्त्वं ददति । तेषां मतानुसारं बालकस्य विकासे वंशानुक्रमः प्रमुखां भूमिकां निर्वहति । आधुनिकमनोवैज्ञानिकाः बालकस्य विकासे वंशानुक्रमस्य तथा वातावरणस्य उभयस्य च योगदानमिति स्वीकुर्वन्ति । अतः अग्रे अस्मिन् विषये विस्तरेण ज्ञास्यामः ।

**वंशानुक्रमस्य अर्थः –**

पूर्वजैः कृत हस्तान्तरितगुणानां मिश्रितसमूहं वंशानुक्रमः कथ्यते । अतः वंशानुक्रमः जन्मजातगुणानां योगफलं भवति । जीवविज्ञानानुसारं निषेचिताण्डे (Fertilized Ovum) इत्यस्मिन् स्थित समस्त सम्भाव्यगुणानां योगफलमेव वंशानुक्रमः कथ्यते । बालकः सामान्यतः शारीरिकरूपगुणेषु स्वस्य मातुः पितुश्च अनुगुणमेव भवति । मनोवैज्ञानां तु मतमस्ति यत् बालकः स्वपित्रोः न केवलं शारीरिकगुणान् अपि तु मानसिक–सामाजिकगुणानामपि प्राप्नोति । बालकः शारीरिक–मानसिकगुणान् पितृभ्यामेव नैव अपितु तस्य पूर्वजैरपि प्राप्नोति । पूर्वजानां गुणानां हस्तान्तरणं पित्रोः माध्यमेनैव भवति । ईदृशानां गुणानां हस्तान्तरणमेव वंशानुक्रमः आनुवंशिकता वा कथ्यते । विभिन्नैः विद्वद्भिः प्रस्तुताम् परिभाषाम् अवलोकनेन वंशानुक्रमस्यार्थः स्पष्टः भविष्यति ।

**परिभाषाः –**

१. वुडवर्थ महोदयानुसारं– "वंशानुक्रमे तानि सर्वाणि तथ्यानि निहितानि भवन्ति, यानि जीवनप्र प्रारम्भसमये, जन्मसमये न अपि तु जन्मतः प्रायः नवमासपूर्व गर्भाधानसमये एव व्यक्तौ उपस्थिताः भवन्ति।"

"Heredity covers all the Factors that were present in the individual when he began life, not at birth, but at the time of conception, about nine months before birth."

२. पीटरसन महोदयानां मते –"को अपि व्यक्तिः स्वस्य पित्रोः माध्यमेन पूर्वजानां यान् गुणान् प्राप्नोति, तदेव वंशानुक्रमरूपेण परिभाषितं भवति ।।"

"Heredity may be defined as what one gets from his ancestral stock through his parents."

३. जेम्स ड्रेवर महोदयानां मते –"शारीरिक तथा च मानसिकविशेषतानां पित्रोः सन्ततिषु हस्तान्तरणमेव वंशानुक्रमः भवति ।।"

"Heredity is the transmission from parents to offspring of physical and mental characteristics."

वास्तविकरूपे वंशानुक्रमः एकः अमूर्त्तः तथा जैविकीयदृष्टेः अत्यन्तं जटिला अवधारणा च भवति । व्यक्तेः भावीजीवनस्य सम्भावनाः प्रायः तस्य वंशानुक्रमस्योपरि निर्भरं करोति । एताभिः परिभाषाभिः स्पष्टं भवति यत् व्यक्तेः जन्मजातगुणः एव वंशानुक्रमः भवति ।

**वंशानुक्रमस्य विशेषताः –**

जीववैज्ञानिकाः तथा च मनोवैज्ञानिकाः वंशानुक्रमस्य अध्ययनं कृत्वा अनेके वंशानुगतविशेषताः वर्णिताः । तैः प्रायः द्विशतं तः(२००) अधिकवंशानुगतविशेषताः निर्धारिताः । वंशानुगतविशेषतां चतुर्षु भागेषु विभक्तमस्ति यथा–

१. संरचनात्मकविशेषताः–वर्गे अस्मिन् सा विशेषता अस्ति, या व्यक्तेः शरीरस्य संरचनया साकं





सम्बन्धितः भवति । शरीरम् अथवा अंगानां मापनम् एवम् आकृतिः, केशानाम् आकृतिः, केशानां विन्यासः, नेत्रयोः वर्णः, त्वचः वर्णः आदि संरचनात्मकलक्षणानि सन्ति । युक्तांगुलिता, एवं लघु अंगुलिता इति संरचनात्मकविशेषतायाः महत्त्वपूर्णानि उदाहरणानि सन्ति ।

२. क्रियात्मकविशेषताः – अस्य वर्गस्यान्तर्गते व्यक्तेः शरीरस्य क्रियाप्रणालिव्यक्तिभिः सह सम्बन्धितं लक्षणं भवति । स्वास्थ्यं, शारीरिकशक्तिः, दीर्घायुः, प्रजननक्षमता, रक्तसमूहः, तथा रुग्णजनं प्रति संवेदनशीलता आदि क्रियात्मकविशेषतायाः प्रमुखानि उदाहरणानि सन्ति ।

३. मानसिकविशेषताः – वंशानुगतविशेषतायाः अस्मिन् वर्गे मानसिकयोग्यताः तथा व्यक्तित्त्वसम्बन्धितलक्षणानि आगच्छन्ति । बुद्धिः, साहित्यिकप्रकृतिः, गणितीयक्षमता, वैज्ञानिकः, गायनक्षमता, एवं संज्ञानात्मकयोग्यता, मितव्ययता, स्वामिभक्तिः, स्वाभिमानम् आदि भावात्मकलक्षणानि मानसिकविशेषतायाः प्रमुखानि उदाहरणानि सन्ति ।

४. असाधारणविशेषताः – वर्गस्यान्तर्गते तानि असाधारणलक्षणानि भवन्ति, यानि व्यक्तिः वंशपरम्परातः प्राप्तानि । अस्मिन् बहु अंगुलिता, वर्णान्धता, अधिकरक्तस्रावः, रक्तहीनता, फीनाइलकोटोनूरिया आदि अनेकानि असाधारणलक्षणानि असाधारणविशेषतायाः उदाहरणानि सन्ति।

**वातावरणस्य अर्थः-**

वातावरणार्थे पर्यावरणशब्दस्य प्रयोगः अपि भवति । सामान्यार्थे वातावरणस्यार्थः व्यक्तेः चतुःपार्श्वे स्थित परिस्थितिनां समन्वयः । पर्यावरणशब्दस्य सन्धिविच्छेदे स्पष्टं भवति यत् पर्यावरणशब्दः परि तथा आवरणमिति शब्दद्वयस्य मेलनेन भवति । परि इत्यस्यार्थः भवति चतुः पार्श्वम्, आवरणमित्यास्यार्थः भवति आवरणकर्त्ता । बालकस्य व्यक्तित्त्वस्य विकासे वातावरणस्य महत्त्वपूर्णं योगदानं भवति । यदि बालकः श्रेष्ठवातावरणं प्राप्नोति, तर्हि सः स्वशक्तिनां विकासं कृत्वा प्रतिष्ठितजीवनं व्यतीतं कर्तुं शक्नोति । पर्यावरणशब्देषु कथयितुं शक्यते यत् वातावरणस्यान्तर्गते तानि सर्वाणि तत्वानि सम्मिलितानि भवन्ति, यानि मानवजीवनं प्रत्यक्षरूपेण प्रभावितं कुर्वन्ति ।

**परिभाषाः –**

१. वुडवर्थ महोदयानुसारं– "वातावरणे तानि सर्वाणि तत्त्वानि आगच्छन्ति, यानि जीवनप्रारम्भ समयात् व्यक्तिं प्रभावयन्ति ।।"

२. जे.एस.राँस महोदयः कथयति- "वातावरणमेका बाह्यशक्तिः अस्ति, या अस्मान् प्रभावयति ।।"

३. डगलस तथा हालैण्ड महोदयौ उक्तवन्तौ –"वातावरणशब्दस्य प्रयोगः तेषां सर्वेषां बाह्यशक्तिनां प्रभावानां, तथा च दशानां सामूहिकरूपेण वर्णनकरणार्थं भवति, यः जीवितप्राणीनां जीवनं, स्वभावं व्यवहारं, तथा वृद्धिविकासस्य परिपक्वतां प्रभावयति ।।"

४. एनी एनास्टासी महोदयस्य मते- वातावरणे तानि सर्वाणि वस्तुनि सम्मिलितानि भवन्ति, यानि व्यक्तेः पैतृकस्य अतिरिक्तं तस्य सर्वान् पक्षान् प्रभावितान् कुर्वन्ति ।।"

**महत्त्वम्-**

१. व्यक्तेः विकासे वातावरणस्य महत्त्वपूर्णा भूमिका भवति । मनोवैज्ञानिकाध्येतारः प्रमाणम् अकुर्वन् यत्- बालकस्य विकासस्य प्रत्येकं पक्षोपरि तस्य भौतिकं, सामाजिकं, सांस्कृतिकं तथा च आर्थिकवातावरणस्य प्रभावः भवति ।

२. बालकस्य वातावरणं गर्भावस्था समयात् एव तस्य विकासं प्रभावयति ।

३. शिशोः जन्मनः प्राप्तवातावरणं , तस्य शारीरिकविकासं, मानसिकविकासं, तथा सामाजिकविकासं च प्रभावयति ।

४. समुचितवातावरणस्याभावे बालकस्य शारीरिकगठने, तस्य शारीरिकवृद्धौ, आकारे च परिवर्त्तनमागच्छति।

५. सामाजिकः तथा सांस्कृतिकवातावरणस्य प्रभावः व्यक्तेःसामाजिक तथा मानसिकविकासोपरि स्पष्टरूपेण परिलक्षितं भवति ।

६. उत्तमवातावरणे संचालित छात्राणां सामाजिकान्तःक्रिया तथा बौद्धिकक्षमताः अधिकाः भवन्ति।

**आनुवंशिकता तथा वंशानुक्रमयोर्मध्ये अन्तःक्रिया**

वंशानुक्रमः तथा वातावरणस्य सम्बद्धे प्रस्तुतोपरोक्त विवेचनात् स्पष्टः भवति यत्, व्यक्तेः विकासे वंशानुक्रमः तथा वातावरणम् उभयस्य महत्त्वपूर्णा भूमिका भवति । व्यक्तेः विकासे तस्य वंशानुक्रमः तथा वातावरणं कीयत् पर्यन्तं प्रभावितं करोति, एतद् एकं विवादास्पदं प्रश्नं भवति । वास्तविकस्वरूपेण वंशानुक्रमः तथा वातावरणं परस्परं परिपूरकः एव । उभयौमिलित्वा व्यक्तेः विकासस्य मार्गं प्रशस्तं कुरुतः । व्यक्तिः यत्किमपि चिन्तनं करोति, अनुभवति तत् सर्वं तस्य वंशानुक्रमः तथा वातावरणस्य परस्पर अन्तःक्रियायाः परिणामः भवति । वंशानुक्रमस्याविकसार्थक्षमताः प्रददाति, एवं वातावरणं तासां क्षमतानां विकसार्थम् अवसरं प्रददाति ।





अस्मिन् विषये वुडवर्थमहोदयः शस्यं तथा धरित्री इत्यनयोः उदाहरणं दत्त्वा स्पष्टीकरोति यत्- "उत्तमो अधिगमार्थम् उत्तमशस्यस्य एवम् उत्तमधरित्र्याः च अपि आवश्यकम् । उत्तमशस्यस्याभावे उत्तमाधरित्री, उत्तमाधरित्र्याः अभावे उत्तमः शस्यः भवितुं नार्हति । तथैव मानवस्य विकासे वंशानुक्रमः तथा वातावरणम् उभयोः महत्त्वपूर्णा भूमिका वर्त्तते ।।" क्रो व क्रो महोदयः अस्मिन् विषये स्पष्टीकृत्वा लिखति यत् –"व्यक्तेः निर्माणं न केवलं वंशानुक्रमे, न केवलं वातावरणे, अपि तु एषः जैविकतत्त्वं तथा सामाजिकसम्पत्तेः एकीकरणस्य परिणामः भवति ।।" वस्तुतः व्यक्तेः विकासे वंशानुक्रमस्य साकं तान् प्राप्त प्रारम्भिकवातावरणस्य प्रमुखा तथा सार्थकभूमिका च भवति । मनोवैज्ञानिकाः अध्ययनं कृत्वा स्पष्टी कृतवान् यत्- जीवनस्य प्रारम्भिकवर्षाणां वातावरणं व्यक्तिम् अत्यधिकं प्रभावयति । प्रारम्भिकवातावरणस्य सम्पन्नतार्थं वृद्धिः तथा विकासस्य प्रक्रियां गतिः तथा उत्तमदशा च मिलति । निःसन्देहं व्यक्तेः विकासं वंशानुक्रमः तथा च वातावरणं परस्परम् अन्तःक्रिया भूत्वा प्रभावयतः ।



# अक्षरस्वरूपम्

**दीपककुमारराउतः**
शिक्षाचार्यः (प्रथमवर्षम्)

अक्षरं न सञ्चरति न वा प्रणश्यति एवं वाचो निवासो यत्र तदक्षरमुच्यते। "अक्षरं न क्षरति न क्षीयते वाक् न क्षयो भवति वाचोऽक्ष इति वा"। यदा नादः मुखकण्ठताल्वादिस्थानेषु प्रतिघातो भवति तदा स वर्णत्वम् आपद्यते। सः नादः नव विधो भवति। यतो हि नादात् शब्दम् उत्पन्नं भवति। ध्वनिर्णं वर्णानाम् अकारदीनाम् उपादानकारणाम् उत्पत्तिः जन्मोपलब्धिर्वा इति ग्राह्यः। अतः विधात्रा सर्वध्वनीनाम्अर्थाः ऋषिभ्यः प्रदत्ता। अथ शब्दोत्पत्तिः इति वचनात् शब्दो नाम ध्वनिः इति स्वीक्रियते। एतद्वचनोपरि पतञ्जलिः समर्थनं करोति। सर्वेषां वर्णानां मूलकारणं ध्वनिः शब्द वा भवति। वस्तुतः सर्वप्रथममैव ऋग्वेदीयश्रुतितः ज्ञायते यत् सर्वासां भाषाणां मूलवर्णात् शब्दः, शब्दात् च वाक्योत्पत्तिः भवति। शब्दः ब्रह्मरूपेण तिष्ठति तस्मात् कार्यशब्दः उत्पद्यते। स च कार्य शब्दः क्वचित् व्यक्तः अनन्त भेदश्च। यद्यपि शब्दशास्त्रं अनन्तम् अपारं च भवति। तथा च शब्दस्य प्रयोगविषयोऽपि अनन्तं भवितुं शक्यते। यतो हि सप्तद्वीपा मही त्रयो लोकः चत्वारो वेदाः साङ्गः सरहस्यबहुधा विभिन्नैकशतमध्वर्यशाखाः, सहस्रमतमसामवेदः एकविंशतिधा बाह्वं , नवधाऽथर्वणो वेदो वाको वाक्यमितिहासाः पुराणं वैदिकमिति

एतावान् शब्दस्य प्रयोगस्थलम्। तथापि येनाक्षरेण देवाः बहीर्भूताः भवन्ति तदक्षरज्ञानं हि न व्यक्तेः शास्त्रसमूहज्ञानं निरर्थकं यतो हि एक साधु शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुक् भवति। अ कारं परंब्रह्म भवति। तन्नित्यत्वादिति। परन्तु मायया भिन्नं प्रदीयते। यतो हि अक्षरं स्वयमेव सृजति। यथा ऊर्णनाभिः स्वयं सृजति भक्षयति च। अतः अनित्यत्त्वानुभवः मायामात्रम्। तथा च विश्वेऽयं अक्षरात् एव सम्भवति। आदो भूतानाम् अजादिस्वराणां कवणार्दिव्यञ्जनानां च आदिमोनादः विश्वगगनमण्डलं प्रतिध्वनयनम् प्रससार। अतो वर्ण विहाय नहि कोऽपि जीवितुं शक्यते। तद्विना मनुष्यः पशुवत् मूढो भवति। वाचः अनित्यत्व इतिं न समीचीनं, तस्य विरुपत्वात्। २६ वर्णस्य अनित्यत्त्वानुभवः मायामात्रमेव विश्वं सृजति। भो वाक् पठनं पाठनं च प्रेरिका सा 'इला' या ज्ञानप्रकाशिता सा 'सरस्वती' या च सर्वार्थपूज्या कुतर्केण खण्डनीया सा 'मही' इति कथ्यते।

वाचा प्राणाः दीक्षिताः भवति। तया दीक्षिताः सन्तः सा सर्वप्राणेषु तथा प्रणस्थानुभवेषु ग्रहणयोग्याः भवन्ति। गृह्यवान् आत्मना धत्ते, अपि च सृष्टेः प्राक् वाचा एवं सर्वविधानि यज्ञानि क्रियन्ते। यतोहि "स्वर्गकाम यजेत्" इति प्रमाणात् येनैव विश्वः ब्रह्मणः वैवर्त्तो भवति। तेनैव वेदत्रयी वचः वैवर्तः अस्ति वस्तुतः वाक् एकमेव। वाचः वेदत्रयम् उत्पद्यते इति श्रुति प्रमाणम्। तथा वाचा सर्वाणि रूपाणि सर्वाणि पिण्डानि च उत्पद्यते। वाक् ब्रह्मणः पराशक्ति। एवञ्च सृष्टेः परमतत्वं वाक् इति स्वीकृतम्। वाक् ब्रह्मणः स्वरूपवर्णनमतीव चमत्कारमयम्। यथा वाग्ब्रह्मणः चत्वारिशृङ्गाः चत्वारि पदजातानि नामाख्यातोपसर्ग निपाताश्च। अस्य त्रयः पादाः नाम त्रयः भूत-भविष्य-वर्तमानाः कालविशेषाः, द्वे शीर्षे द्वौ वागात्माजौ नित्यः कार्यश्च। याः सप्तविभक्तयः ते एव सप्तहस्ताः त्रिधा त्रिपु स्थानेपु बद्धाः। वृषभः सुखस्य वर्णकः रोरवीति शब्दायते। सः महादेवः भवाभिव्यञ्जका वाक् रुद्रादिविश्वेदेवैः सह विचरति। वाक् रुद्रादि विश्वदेवैः सह विचरति। वागेवमित्र वरुणादि अश्विनो कुमाराणां प्रेरको भवति। २४ वागेव निचुपूर्ण सोमो भवति। स्वयं वाक् समस्तरूपकर्ता भवति। २५ पालकोऽपि ऐश्वर्यक्षमता भवति। सा वाक् यजमानस्य श्रीवृद्धिकारी भवति। वाक् राष्ट्रस्य स्वामी धनपदोऽपि भवति। यज्ञेपु वाक् प्रथमा ज्ञात्री भवति। ये देवाः बहुषु स्थानेषु तिष्ठन्ति स्थातुं न शक्यन्ति ते देवाः वाचं आश्रयन्ति। २६ यो अन्नं श्वदति, पश्यति, प्रणान् धारयति श्रृणोति च एतद् सर्व वाक् शक्तेः अभिन्नं भवति। समस्त उक्ति वाक् ददाति। वाचः समीपे स्थित्वापि ज्ञानिनः वाचं न जानन्ति। सत्यवस्तुनः मार्ग प्रदर्शयामि श्रृणु ।१७ अहमेव स्वयं देवैः मनुष्यैः सेवितो भूत्वा तिष्ठति। ये मां उपासते तं पश्यामि। तस्य सुमेधां चिन्तयामि। वागेव ब्रह्मद्वेषीणः संहारार्थ धनुर्मध्ये वाणं संयोजयति। अन्यथा ब्रह्मद्वेषीणः संहारः असम्भो स्यात्। वाक् सचराचरजगति व्याप्ता भवति। सचराचरजगतः पालकः वाक् भवति। वाक् सूर्यलोकं प्रेष्यति।





वाचो निवासः सागरं भवति। सागरात् उत्पन्नो भूत्वा सर्वस्थले प्रविश्य द्युलोकं स्पर्शति। वाक् समस्त भुवनं शब्दायमाणो वारयति विश्वे यानि भुवनानि सन्ति तेषु वाक् सर्वव्यापिका भवति। उपनिषदगीतादिषु ब्रह्मविद्यायाः अपि महिमा वर्णनं यथा – यदक्षरं वेदविदो वदन्ति। ओंमित्यकाक्षारं ब्रह्मव्याहरन् मामनुस्मरन् अक्षराणामकारे हं त्वमक्षरं ब्रह्मपरं त्वहि ब्रह्म परं ज्योतिर्गुढ ब्रह्माणि वाङ्मये एवं स्फोटं आश्रयी भूत्वा वर्णमयजगत पृथक् पृथक् भवति। अतः विभिन्नप्रमाणवचनेभ्यः परब्रह्मेति शब्देन अक्षरं /शब्दम् अभिधीयते। अतः उक्तं – तस्य ब्रह्मसदाजीव यत्र मात्रा प्रवर्त्तते पवित्रं परमात्मा च शब्दब्रह्मप्रजायते।

सहायकग्रन्थसूचीः/पादटिप्पण्यः –


१. निरुक्तम् २३.२२, तै प्रा. १.२
२. पाणिनीयशिक्षां– पृ–२
३. तै. प्रा –२.२
४. महाभाष्यम् "प्रतितपदार्थकः लोके ध्वनिः शब्दो" इति।
५. "शब्दः प्रकृतिस्सवर्णानाम" – तै, प्र. २२.२
६. ऋ. वे. २०.२२५.२
७. ऋ.वे.वा सूक्त– २०.२२५.६
८. शब्दब्रह्म परंब्रह्म ममोभे शश्वती तनु – श्रीभागवतम् ६/२६/५२ श्लोकः।

# अनुसन्धाने अभिप्रेरणस्य भूमिका

अनुपकुमारलायकः
शिक्षाचार्यः, द्वितीयवर्षम्

"Motivation is a set of conditions which activate direction and maintain behaviour towards some goal."

सामान्यरूपेण अभिप्रेरणं नाम एतस्मिन् विषये जानीमः । अनुसन्धानं भवति वैज्ञानिकरूपेण अध्ययनम् इति । अनुसन्धानम् एकं वैज्ञानिकं मार्गं भवति येन किमपि समस्यायाःसत्यतायाः विषये परिणामम् अन्वेषयति । अनुसन्धानेन वयं किमपि नवीनज्ञानविषये ज्ञातुं प्रभवामः । अनुसन्धानस्य काश्चन परिभाषाः अधः प्रस्तूयन्ते –

- Research is always verifying new knowledge.
- Research is exploring new knowledge.
- Research is scientific way to search for truth for any problem.
- Research is an execution process to gain new knowledge.

विविधानि अनुसन्धानानि सन्ति यथा – मौलिकानुसन्धानम् ( Fundamental Research), प्रयोगात्मकानुसन्धानम् (Applied Research), क्रियात्मकमनुसन्धानम् ( Action Research), ऐतिहासिकानुसन्धानम् (Historical Research) इत्यादयः । इतोऽपि विविधविधिः माध्यमेन अनुसन्धानं क्रियते इति यथा – वर्णनात्मकविधिः( Descriptive method), प्रयोगात्मकविधिः( Experimental method), सर्वेक्षणविधिः (Survey method) यतोहि अनुसन्धानम् एकं बृहदांशः भवति तद् यथा–

- अनुसन्धानप्रक्रिया ।(Research process)
- प्रदत्तसंकलनम् । (Data collection)
- प्राक्कल्पना ।(Hypothesis)
- चराः ।(Variables)
- न्यादर्शः ।(Sample) इत्यादयः ।





इतोऽपि सूक्ष्मातिसक्ष्मः विषयाः वर्तन्ते इति ।

यतोहि अनुसन्धानं नाम श्रुत्वा छात्राः भीताः भविष्यन्ति । तस्य कारणं भवति अनुसन्धानम् एकः गभीरः अध्ययनं वर्तते । अतः अनुसन्धानं करणार्थं विविधः पारिपार्श्विकः सहायताः तथा अनुसन्धानकर्तुम् आन्तरिक इच्छा तथा योग्यता अपि परमावश्यकी इति । ये कारकाः अनुसन्धाने प्रेरयन्ति तद् भवन्ति –

- योग्यता( Ability)
- बुद्धिः( Intelligence)
- शारीरिकक्षमता( Physical Ability)
- रुचिः( Interest)
- अभिप्रेरणा( Motivation) इत्यादयः ।

उपरि उक्तेषु कारकेषु सर्वाणि कारकाणि अत्यन्तम् आवश्यकानि । परन्तु तन्मध्ये अभिप्रेरणा इत्यस्य सर्वोपरि आवश्यकता वर्तते इति, परन्तु तद् कुतः आगच्छति । तद् स्वयमेव तथा पारिपार्श्विकः अवस्थातः अनुसन्धानकर्तुः अभिप्रेरियुतं शक्यते इति।अभिप्रेरकं द्विविधम् इति मनोवैज्ञानिकाः चिन्तयन्ति–

**जन्मजातः अभिप्रेरकः । अर्जितः अभिप्रेरकः ।**

जन्मजातः अभिप्रेरकः अनुसन्धाने अधिकम् उपकारकं न भवति । परन्तु अर्जितस्य अभिप्रेरकस्य महती अस्ति एव नास्ति सन्देहः । अर्जितः अभिप्रेरकः ( Acquired motivation) जन्मजातं न भवति। अयम् अभिप्रेरकः आगच्छति सामाजिकः वातावरणतः । अनेन व्यक्तिः जैविकारूपेण (Biologically) जीवितुं शक्यते परन्तु सामाजिकं भूत्वा (Socially) जीवितुं न शक्नोति । सामाजिकः परिस्थितिः यथा– परिवारः, प्रतिवेशी,विद्यालयः, मित्राणि,शिक्षकाः इत्यादयःप्रमुखः सामाजिकः अभिप्रेरकाः भवन्ति – उपलब्धेः आवश्यकता ,सत्तास्तरेषु आवश्यकता,आक्रमणशीलतायाः आवश्यकतानुमोदनस्य आवश्यकता।

उपर्युक्तेषु अभिप्रेरणेषु उपलब्धिः अभिप्रेरणस्य महत्त्वम् अस्ति, यतोहि अनेन व्यक्तिः प्रेरिता सति सम्यक् रूपेण कार्यं करोति । (Generally this motive [achievement motivation] is defined as a desire for attaining some specific standard of excellence ) {munn,fernald} उपलब्धिः अभिप्रेरकस्य आधिक्यवशात् जनाः उच्चस्तरेषु सफलतां प्राप्नुवन्ति इति।

अनुसन्धाने अभिप्रेरणस्य भूमिका इत्यस्मिन् लेखे वयं द्रष्टुं शक्नुमः यत् अर्जितः तथा जन्मजातः अभिप्रेरकयोः मध्ये अनुसन्धानक्षेत्रे अर्जितः अभिप्रेरकस्य आवश्यकता अधिकं वर्तते इति । अतः अनुसन्धाने अभिप्रेरणस्य अतीव महत्ता अस्ति – "motivation is very important from an research point view because it transform human resources into action. And this improves efficiency level of the researcher and its leads to achieve research goal."

***Reference:***

Research methodology ( Mangal S.K., Mangal Subhra).

Journal (Isbn- 2090-4304)[Asghar ali, saeed md.)

आधुनिकमनोविज्ञानम् ( मिश्रः ,लोकमान्यः )

Educational psychology ( Singha kumar Aru)

# जीवन अनुभव से सम्बन्धित पाठ्यक्रम का निर्माण

**अतुल राय**

शिक्षाचार्य द्वितीयवर्ष

पाठ्यक्रम वह साधन होता है जिसके द्वारा शिक्षा के लक्ष्यों की प्रप्ति होती है। यह अध्यापक द्वारा प्रयुक्त एक निश्चित एवं तर्कपूर्ण व्यवस्था है जिसके माध्यम से शिक्षार्थी के व्यक्तित्व का निर्माण सम्भव होता है और वह नये अनुभवों तथा ज्ञानराशि को हृदयंगम करता है। कनिंघम के मतानुसार –"कलाकार (शिक्षक) के हाथ में एक ऐसा साधन है जिसके द्वारा वहपदार्थ शिक्षार्थी को अपने आदर्श (उद्देश्य) के अनुसार अपने स्कूल में ढाल सके" । शिक्षक जिन परिस्थियों, अनुभवों तथा योजनाओं द्वारा बालक के व्यवहार में अभीष्ट परिवर्तन लाता है उन्हें पाठ्यक्रम कहा जाता है।

हमारे वर्तमान पाठ्यक्रम की सबसे बडी कमी यह है कि यह छात्रों को जीवन के अनुभवों से परिचित नहीं करा पाता है। शिक्षा जीवन से जुडी क्रिया है तथा यह जीवन की तैयारी है। बालक के





सामाजिक तथा राष्ट्रीय जीवन में उत्तरदायित्व ग्रहण करने के लिए अपेक्षित ज्ञान कौशल तथा अभिवृत्ति का विकास पाठ्यक्रम के माध्यम से सम्पन्न होता है। हमारे पाठ्यक्रम में इसका अभाव है। प्रचलित पाठ्यक्रम केवल पुस्तकीय ज्ञान (Bookish knowledge) पर बल देता है। बालक केवल नवीन सूचना तथा ज्ञान प्राप्त करने की दृष्टि से पाठ्यक्रम का प्रयोग करता है। यह अत्यन्त दुर्भाग्य पूर्णस्थिति है। शिक्षा और जीवन के मध्य जो यह खाई है, वह कम होनी चाहिए। माध्यमिक शिक्षा समिति ने कहा है कि–"हमारी माध्यमिक शिक्षा की भाँति हमारे पाठ्यक्रम का भी जीवन से कोई सम्बन्ध नहीं है। यह छात्रों को जीवन के लिए तैयार करने में असफल रहा है। यह कक्षा से बाहर की दुनिया का जिसमें वे शीघ्र प्रविष्ट होने वाला है, उन्हे कोई बोध या आभास नहीं करा पाता।"

देश की अनेक समस्यायें है। बालक को सामाजिक, राजनैतिक एवं आर्थिक जीवन की समस्याओं से टक्कर लेने के प्रति समर्थ बनाने में हमारा वर्तमान पाठ्यक्रम सक्षम नहीं है। इसी दृष्टि से कोठारी आयोग ने शिक्षा के सभी स्तरों पर पाठ्यक्रम में आमूल चूल परिवर्तन लाने का सुझाव दिया था। इसमें प्रत्येक स्तर पर पाठ्यक्रम में कार्य अनुभवों (Work experiences) को उचित स्थान देने की जोरदार सिफारिश की गई।

(वह पाठ्यक्रम जिसमें विविध विषयों की शिक्षा के एकेडेमिक पक्ष को ही स्थान प्राप्त है, जिसमें बालक के जीवन अनुभवों को जाग्रत करने के प्रति)

"बाहर के देशों में पाठ्यक्रम बदलाव हो रहे है, उनके सापेक्ष भारत में विद्यालयी पाठ्यक्रम अत्यन्त संकुचित रूप में गठित है तथा वे अधिकांश पुराने हो चले हैं। शिक्षा एक त्रि – आयामी प्रक्रिया है। जिसमें ज्ञान प्रदान करना, कौशलों को विकसित करना तथा उचित प्रकार की रूचियों, अभिवृत्तियों एवं मूल्य का संवर्धन करना ध्येय होता है। हमारे शिक्षा संस्थान ज्ञान प्रदान करने तथा उसे भी अत्यन्त असन्तोषजनक ढंग से क्रियान्वित करने तक ही अपने कर्तव्य की इति श्री समझते है। यहाँ पाठ्यक्रम किताबी ज्ञान एवं रटन्त अधिगम पर बल देता है, व्यवहारिक क्रियाओं तथा अनुभवों के सृजन पर अपर्याप्त रूप में प्रावधान करता है तथा इस पर परीक्षाओं से आन्तरिक एवं बाह्य का वर्चस्व बना हुआ है। तथापि उपयोगी कौशलों तथा उचित प्रकार की रूचियों, अभिवृत्तियों एवं मूल्यों के विकास पर कम ही जोर दिया जाता है। इसका परिणाम यह है कि पाठ्यक्रम आधुनिक ज्ञान राशि से सम्बन्धित न होने के साथ जन–जीवन से भी विसंगत हो जाता है। इस परिप्रेक्ष्य में विद्यालयीय पाठ्यक्रम को समुन्नत बनाने, उसके स्तरोन्नयन एवं सुधार की उत्कट आवश्यकता है।"

कहने का अभिप्राय यह है कि हमारा पाठ्यक्रम एक पक्षीय है। उसके द्वारा ज्ञान प्रदान करने की क्रिया भी सन्तोषजनक ढंग से सम्भव नहीं है। आधुनिक युग में बडी तेजी से हमारे ज्ञान विज्ञान की प्रगति हो रही है। वर्तमान विश्व के समक्ष ज्ञान के विस्फोट (Explosion of knowledge) की समस्या उग्र रूप धारण कर चुकी है। हमारा पाठ्यक्रम इस आधुनिकतम ज्ञान की दृष्टि से भी पिछड़ा हुआ है। इसका मुख्य कारण यह है कि ज्ञान के क्षेत्र में जिस तेजी के साथ विस्तार हुया है, हमारे पाठ्यक्रम उसके साथ परिवर्तित नहीं होते रहें है। इसके अतिरिक्त पाठ्यक्रम का जीवन से सम्बन्ध विच्छेद हो गया है और आज हमारे पाठ्यक्रम निर्जीव एवं जर्जर यन्त्र के रूप में शिक्षा प्रक्रिया के साथ जुडे हुए है। इनके द्वारा बालक में प्रजातान्त्रिक जीवन की शैली अपनाने के लिए अपेक्षित कुशलता, रूचि, अभिवृत्ति एवं मूल्यों का निर्माण करना असम्भव बन गया है। इधर एन. सी. ई. आर. टी. द्वारा जारी राष्ट्रिय करिक्युलम फ्रेमवर्क (२००५) से नई दिशा प्राप्त हुई है, किन्तु उसके क्रियान्वयन पर राज्यों द्वारा किये गये प्रस्ताव अभी ठण्डे बस्ते में ही पडे हुए है।

पाठ्यक्रम को समाज तथा राष्ट्र के जीवन के निकट लाने के लिए यह आवश्यक है कि इसका पुनर्गठन किया जाए तथा इसके परम्परागत स्वरूप को पूर्ण रूप से बदल दिया जाये। इस दृष्टि से कुछ वातों पर ध्यान देना आवश्यक है जो इस प्रकार –

१. पाठ्यक्रम लचीला तथा संवेदनशील बनाया जाय जिससे समाज तथा राष्ट्र के जीवन की आवश्यकताओं, मान्यताओं आकांक्षाओं तथा आदेशों को परिवर्तित परिस्थितियों के सन्दर्भ में प्रतिविम्वित किया जा सके।

२. पाठ्यक्रम में जीवन की घटनाओं, परिस्थितियों एवं वास्तविकताओं के प्रति उदासीनता का भाव न हो। वालक की रूचि विकसित करने के लिए यह अपेक्षित है।

३. पाठ्यक्रम में वालक की क्रियाओं पर विशेष वल देना चाहिए जिससे वह उपयुक्त अनुभव प्राप्त कर सके और अपने जीवन की समस्याओं को समझने तथा सुलझाने के लिए उन अनुभवों का प्रयोग कर सके।

४. शिक्षा के प्रत्येक स्तर पर कार्य अनुभवों को उचित स्थान मिलना चाहिए और पाठ्यक्रम द्वारा वालक के व्यक्तित्व का सर्वाङ्गीण विकास प्रमुख लक्ष्य होना चाहिए।





**निष्कर्षः –**

हमारे वर्तमान पाठ्यक्रम की सबसे बडी कमी यहहै कि इसमें पुस्तकीय ज्ञान पर अनावश्यक रूप में जोर दिया जा रहा है और उसमें जीवन के अनुभवों से सम्बन्ध जोडने की चेष्टा नहीं की जाती है। प्रजातन्त्र की सफलता के लिये यह आवश्यक है कि इस दिशा में कुछ निश्चित तथा ठोस कदम उठाये जायें।

# धार्मिकपरिपेक्षे शिक्षा

**प्रियदर्शनीबनजागुरु**
शिक्षाचार्यः(प्रथमवर्षम्)

अस्माकं भारतवर्षं भवति धर्मनिरपेक्षराष्ट्रम् । तत्र बहवः धार्मिकजनाः निवसन्ति। तत्र विविधाः सम्प्रदायजनाः धर्मशब्दस्य अर्थं विविधरूपेण प्रतिपादितवन्तः । यथा हिन्दुजनाः धर्मशब्देन पूजा-पाठ-कथा-व्रत प्रार्थनादिकार्यं कुर्वन्ति । मुस्लिमजनाः नमाजादिकार्यं कुर्वन्ति। तेषां मतानुसारं एवमेव कार्यं भवति धर्मः। एवमेव प्रकारेण ते सम्प्रदायाः स्वधर्मस्य कृते पृथक् शिक्षा प्रदानस्य व्यवस्थामपि कृतवन्तः । तत्र हिन्दुजनानां कृते गुरुकुलरूपेण पृथक् शिक्षा व्यवस्था, मुस्लिमजनानां कृते मदरसा एवञ्च ख्रीष्टनजनानां कृते Holly Cross इत्यादिरूपेण पृथक् शिक्षाप्रतिष्ठानस्य व्यवस्था कृतम्।

**धर्मस्य अर्थः (Meaning of Religion) –**

धर्मशब्दस्य व्युत्पत्तिः 'धृङ्' धारणपोषणयोरित्यस्यात् धातोः 'मन्' प्रत्यये कृते निष्पन्नः। धर्मोऽयं विश्वस्य धारकरूपेण जनानां पालकरूपेण विदितः। पुनः धर्मस्य व्युत्पत्तिं साधारणतःत्रिधा दृश्यते। प्रथमतो ध्रीयते लोकोऽनेन, द्वितीयतः धरति वालोकं, तृतीयतो ध्रीयते लोकयात्रानिर्वहाणार्थं योऽसौ धर्मः। साधारणार्थे व्यक्तिः यत् धारणं करोति तदेव तस्य धर्मः भवति। अत्र यत् इत्यनेन मानवता, मनुष्यत्वं, कर्त्तव्यम् इत्यादयः आगच्छन्ति।

भगवता मनुना तस्य मनुस्मृतौ ग्रन्थे धर्मस्य लक्षणं कृतम् –

**विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।**
**हृदयेभ्यनुज्ञातो यो धर्मस्तं निबोधत ।।**
**(मनुस्मृति- २/१)**

स्वामिविवेकानन्देन अपि धर्मविषये उक्तं यत् –

सत्यं धर्म सर्वदा सकारात्मकं भवति, अशुभम् असत् कर्मेषु निवृत्तिहि धर्मः न भवति वास्तवे शुभं सत्कार्यकरणमेव धर्मः भवति।

**शिक्षायाः अर्थः (Meaning of Education) –**

शिक्षाशब्दः शिक्ष् विद्योपादाने इत्योस्माद्धातोः इत्यनेन सूत्रेण अ प्रत्ययेन प्रातिपदिकत्वेन च निष्पाद्यते। आन्तरिकशक्तिनां बहिरानयनमेव शिक्षा भवति। व्यापकार्थेऽस्मिन् या आजीवनं प्रचलति सा शिक्षा इति। मानवः स्वजीवने यत्र कुत्रापि, येन केन प्रकारेण यत् किमपि वा अनुभवं करोति सर्वं शिक्षया एव सिद्धं भवति।

स्वामिविवेकानन्देन शिक्षाविषये उक्तं यत् –

Education is the manifestation of perfection already in men.

**धर्मशिक्षयोः सम्बन्धः (Relation Between Religion and Education)–**

धर्मशिक्षयोः सम्बन्धः अत्यन्तं घनिष्टं भवति। यथा –

- धर्मशिक्षयोः सम्बन्धः लक्ष्यं भवति व्यक्तौ स्थितानां विविधगुणानां विकासीकरणम्। यथा शारीरिकविकासः, आध्यात्मिकविकासः।
- धर्मशिक्षे व्यक्तौ आकांक्षा वर्धते।
- शिक्षा समाजम्, बालकान् च सभ्यं सुसंस्कृतं च निर्माणे प्रयासं करोति। एवञ्च धर्म तत्प्रयासे सहायकं भवति। धर्मं विहाय शिक्षायाः समर्थनं न भवति। महात्मागान्धी, डा.राधाकृष्णन्, स्वामिविवेकानन्दादिभिः प्रभृतमनीषिभिः धार्मिकशिक्षायाः समर्थनं कृतम्।
- धर्मेण वयं क्षमा, स्वतन्त्रता, समानता, परोपकारः मानवतायाः विषयं पाठयन्ति। एषः गुणः जनतन्त्रस्य कृते आवश्यकं भवति । एवं शिक्षायाः कृते ध्येयस्वरूपं भवति।

**धार्मिकशिक्षायाः लक्ष्यम् (Aims of Religious Education) –**

धार्मिकशिक्षायाः लक्ष्यविषये वयं कथयामश्चेत् निम्नलिखितविषयाः आगमिष्यन्ति–

१. छात्रेषु नैतिकभावनायाः विकासः।





२. जनतन्त्रः, देशप्रेमः, श्रद्धायाः जागरणम्।

३. संस्कृतेः रक्षणं संशोधनञ्च।

४. छात्रेषु आत्मविश्वासः उत्साहस्य च जागरणम्।

५. बालानां मानसिकगुणानां जागरणं तथा सत्यम्-शिवम्- सुन्दरं प्रतिष्ठा।

६. बालकानां एकाङ्गी जीवनपेक्षया सम्पूर्णजीवनस्य शिक्षाप्रदानम्।

**धार्मिकशिक्षायां पाठ्यसामग्री (Content of Religious Education)–**

धर्मशिक्षयोः परस्परं सम्बन्धः युक्तः अतः धार्मिकशिक्षायाः पाठ्यसामग्री– आत्मा–परमात्मनः व्यक्तिः अपरव्यक्तेः सम्बन्धयुक्तः मनुष्यानां सृष्टेः विषयकं (यथा – मनुसंहिता), प्रकृतेः स्वरूपम्, ईश्वरस्य स्वरूपम्, इत्यादि विषयकं भवेत्।

**धार्मिकशिक्षायां शिक्षणविधिः (Teaching Method of Religious Education) –**

यद्यपि धार्मिकशिक्षाप्रदाने प्रवचनविधिः मुख्यस्थानम् अलङ्करोति तथापि अत्र प्रवचनविधिं विहाय कस्यचनविधेः महत्त्वपूर्णं योगदानम् अस्ति। ते यथा – प्रत्यक्षविधिः, कथाकथनविधिः, दृष्टान्तविधिः, प्रश्नोत्तरविधिः, भ्रमणविधिः वादविवादविधिः इत्यादयः।

**धार्मिकशिक्षायाम् अध्यापकः (Teacher of Religious Education) –**

धार्मिकशिक्षायाः अध्यापकः साधारणतः मृदुस्वभावसम्पन्नः भवेत्। एतद् अतिरिच्य अध्यापकः सहनशीलयुक्तः, धैर्यशीलः, विवेकपूर्णः, आत्मसंयमः, श्रद्धावानपि भवेत्।

**उपसंहारः (Conclusion) –**

अतः उपर्युक्ते विषयम् आलोचनं कृत्वा वयं एतत् कथितुं शक्नुमः यत् देशस्य तथा स्वहितार्थं धार्मिकशिक्षा आवश्यकं भवति। बालकानां व्यक्तित्वस्य पूर्णविकासाय धार्मिकशिक्षा एकः अनिवार्यः पदक्षेपः भवति। धार्मिकशिक्षायाः अभावेन सदाचारं विनष्टं भविष्यति, विविध धर्माणां सारभूततत्वं ज्ञानार्थं धार्मिकशिक्षा सर्वेषु विद्यालयेषु अवश्यमेव भवेत इति।

# पाठ्यचर्यायां शासनप्रभावः वैश्विकसन्दर्भश्च

उषाराणीमिश्रः
शिक्षाचार्यः (प्रथमवर्षम्)
अनुक्रमाङ्कः - ०५

**वैश्वीकरणम् –**

आधुनिकसमाजे प्रतिदेशयोर्मध्ये पारम्परिकविरोधनीतिभिः समग्रविश्वं दोलायमानं जायमानं वर्तते। अस्यां विपत्तौ विभिन्नदेशौ विकाससम्पादनार्थं नूतनार्थिकनीतयः प्रविधयः अर्थविनियोगस्य क्षमताः मूलभूतवस्तुनामुत्पादनक्षमताश्च वैश्विकस्तरे विनिर्मिताः। द्वितीयविश्वयुद्धसमनन्तरं विश्वे संयुक्तराष्ट्रामेरिका शक्तिशालिराष्ट्ररूपेण परिगणितोऽभवत्। एतेन स्वीयनेतृत्वे १९४६ तमे जूनमासे आन्ताराष्ट्रीयमुद्राकोषः, 1st जून १९९५ तमे वर्षे विश्वव्यपारसङ्गठनं च संस्थाप्य विश्वे आर्थिकक्षेत्रे स्वीयमस्तित्वं प्रतिष्ठापितम्। तदेव LPG इत्युच्यते।

L अर्थात् –Liberalisation (उदारीकरणम्)

P अर्थात् –Privatisation (आत्मीकरणम्)

G अर्थात् –Globalisation (वैश्वीकरणम्)।

इतः एव वैश्वीकरणस्य प्रारम्भो सञ्जातः। जगत्यनेकेषां देशानां सामाजिक, आर्थिक–राजनैतिकक्षेत्रेषु एकः अपरदेशैः सह निकटता एकीकरणं च वैश्वीकरणम् अथवा भूमण्डलीकरणमिति कथ्यते। प्रत्येकदेशस्य देशान्तरैः सह वस्तुसेवा संचितधनं बौधिकसम्प्रदायाः अप्रतिबन्धितादानप्रदानमेव वैश्वीकरणम्।

**शासनप्रभावः –**

सामान्यरूपेण यदि वयं शासनप्रभावस्य कार्याणां विषये चिन्तयामः तर्हि निम्नरूपेण प्राप्यते–

१. शैक्षिकनीतिनिर्माणम् (भारतीयशिक्षायाः लक्ष्यं समस्याः च)

२. योजनानिर्माणम् (आर्थिकव्यवस्थायाः निर्माणम्)

३. संसाधनानां संगठनं समायोजनं च





शासनप्रभावस्य कार्याणां विषये निरूपणानन्तरं, सम्प्रति शैक्षिकप्रभावविषये चिन्तयामः तर्हि प्राप्यते –

१. शैक्षिकव्यवस्थायाः लोकतान्त्रिकीकरणम्।

२. शैक्षिकव्यवस्थायाम् एकरूपिण्याः विविधतायाः च समावेशः।

३. शैक्षिकमानकानां गुणवत्तानां च निर्धारणम्।

४. समस्यासमाधानम्।

**सम्प्रति वैश्विकसन्दर्भे शिक्षायां शासनप्रभावः –**

१. शिक्षा सर्वदा स्वसंस्कृतेः परम्परानुगुणञ्च परिवर्तिता भवति। जातिकरणेन बाह्यसंस्कृतेः अबाधप्रवेशो जायते।

२. बाह्यसंस्कृतेः प्रभावेन स्वसंस्कृतेः रक्षा सञ्जायते।

३. भारतीयशिक्षाप्रणाली स्वल्पव्ययसाधिका, वैश्वीकरणस्य प्रभावेन शिक्षा व्ययसाध्य भवति।

४. अनेन वैदेशिकसंस्कृतेः ज्ञानं सम्भवति।

५. छात्राणां मनः विश्वोन्मुखी भवति।

६. वैश्वीकरणस्य प्रभावेन प्रचलिता शिक्षाप्रणाली विश्वबन्धुत्वभावनायाः संस्थापने सक्षमः भवति।

७. छात्राः पुरातनतां विस्मरन्ति केवलम् आधुनिकतायानुकरणं कुर्वन्ति।

८. वैश्वीकरणशिक्षा सर्वदा यथार्थमनुकरोति येन छात्राणां सृजनशक्तेः कल्पनाशक्तेर्वा विकासोऽसम्भवः जायते।

**शैक्षिकनिहितार्थः –**

वैश्वीकरणस्य प्रभावेण प्रचलितायाः शिक्षाप्रणाल्या अनेकानां शैक्षिकोद्देश्यानां सिद्धिः सहजेन एव भवति। तेषु निर्धनतायारून्मूलनम्, आर्थिकसमानता, आन्ताराष्ट्रीयसहयोगभावनायाः विकासः उच्चजीवनस्तरप्राप्तिः, संतुलितविकासः उदारीकरणम् एतानि सर्वाणि उद्देश्यानि प्रमुखानि सन्ति। वैश्वीकरणेन समाजे व्याप्ताः अनाहारः निर्धनता–अशिक्षा तथा न्यूनकर्मसंस्थादीनाम् अत्याधुनिकप्रविधेः उपयोगिन स्वोत्पादनक्षमतायाः विकासं कर्तुं प्रभवन्ति। एतादृशं वैश्वीकरणं वैदेशिकार्थविनियोगिन स्वीयदेशीयोद्योगसंस्थासु परस्परसामञ्जस्य-संस्थापनपूर्वकं देशस्य उन्नतिं साधयतीति।

# प्रजातन्त्रं शिक्षा च

जि. सूर्यप्रसाद

DEMOCRACY इति आंग्लशब्दस्य समानार्थकत्वेन "प्रजातन्त्रम्" इति शब्दः व्यवहारे वर्तते DEMOS इति CRATIC इति शब्दद्वययोजनेन DEMOCRACY शब्दः उत्पन्नः। DEMOS =शक्तिः CRATIC = जनता। अर्थात् जनतायाः शक्तिः अथवा जनतायाः हस्ते शक्तिः।

प्रजातन्त्रस्य अर्थं वदन् अब्राह्मलिंकन् महोदयः प्रस्तौति यत् "जनतायाः जनताद्वारा जनतायै य शासनं भवति, तत् प्रजातन्त्रम् इति"।

DEMOCRACY IS A GOVERNMENT 'OF THE PEOPLE", 'BY THE PEOPLE 'FOR THE PEOPLE".(ABRAHAM LINCOLN)

प्रजातन्त्रं न केवलं राजनैतिकक्षेत्रपर्यन्तमेव भवति। यावत्पर्यन्तं प्रजातन्त्रं राजनैतिकक्षेत्रपर्यन्तमे गृह्यन्ते, तावत्पर्यन्तं तत् असफलमेव भविष्यति। राजनैतिकक्षेत्रपर्यन्तम् एव प्रजातन्त्रस्य अर्थग्रह सङ्कुचितम्। न केवलं राजनैतिकक्षेत्रे, अपि तु जीवनस्य आर्थिक-सामाजिक-धार्मिक शैक्षिकक्षेत्रे अस्य प्रजातन्त्रस्य प्रयोगः, महत्वञ्च वर्तते। एवं प्रजातन्त्रं बहुधा वक्तुं शक्यते। तथापि प्रकारत्रयं सर्वैः समाजशास्त्रिभिः स्वीकृतम्।

प्रजातन्त्रस्य प्रकारत्रयम् –

१. राजनैतिकं प्रजातन्त्रम् ।

२. आर्थिकं प्रजातन्त्रम् ।

३. सामाजिकं प्रजातन्त्रम् ।

**राजनैतिकं प्रजातन्त्रम् –**

जनतायाः जनता द्वारा जनतायै यत् शासनं भवति, तत् प्रजातन्त्रं भवति (अब्राह्म लिंकन महोदयस्य)। एतदेव प्रजातन्त्रं राजनैतिकं प्रजातन्त्रं भवति।

**आर्थिकं प्रजातन्त्रम् –**

जनता द्वारा जनतायै धनस्योत्पत्तिः, तथा वितरणं आर्थिकं प्रजातन्त्रं भवति





**सामाजिकं प्रजातन्त्रम् –**

वर्ण, जाति, वर्ग, लिङ्ग, धर्मादि अन्तरं (भेदं) विना सर्वेषां समानत्वस्वीकरणं सामाजिकं प्रजातन्त्रं भवति।

* प्रजातन्त्रम् – परिभाषा –
* अरस्तु–जनतायाः शासनमेव प्रजातन्त्रम्।
* लार्ड ब्राइस्–सामूहिकरूपेण समस्तजनतायाः हस्ते विना व्यक्तिवर्गवर्णादिभेदं यत् शासनं भवति तत्प्रजातन्त्रम्।
* सीले–प्रजातन्त्रं तत् शासनं, यत्र सर्वे भागं गृह्णीयुः।
* डा. राधाकृष्णन् विश्वविद्यालय–आयोगः – प्रजातन्त्रं जीवनयापनस्य एका शैली, न तु राजनैतिक–व्यवस्थामात्रम्।

**प्रजातन्त्रस्य मूलसिद्धान्ताः–**

प्रजातन्त्रस्य सफलता विधानसभानां विधानपरिषदाञ्च स्थापनेन न भवति, अपितु प्रजातन्त्रस्य मूलसिद्धान्तानां गुणानाञ्च मानवजीवने (स्वजीवने) पालनेन भवति। प्रजातन्त्रस्य मूलसिद्धान्ताः चत्वारः भवन्ति। ते –

**१. स्वतन्त्रता –**

सिद्धान्तोऽयं प्रजातन्त्रस्य आत्मत्वेन उच्यते। अस्य अभावे न कोऽपि स्वशक्तीनां विकासं कर्तुं प्रभवति।

**२. समानता –**

प्रत्येकस्य जनस्य स्वव्यक्तित्वविकासाय समानः अवसरः प्रदीयते। "समानः अवसरः" इत्यस्य नायमभिप्रायः यत् सर्वेषां समानं एकमेव अवसरं कल्पनीयमिति।

व्यक्तिगतविभिन्नता सिद्धान्तानुसारं कौचित् द्वौ जनौ समानौ न भवतः। सर्वेषु किमपि किमपि अन्तरं भवत्येव। अतः "प्रजातन्त्रे समानतायाः" अर्थः भवति यत् – प्रत्येकस्य जनस्य तस्य रुचेः, योग्यतानां, क्षमतानां अनुसारं विकासाय सर्वविधव्यवस्थायाः स्थापनम्। अर्थात् आवश्यकयोग्यताप्राप्तेः

अनन्तरं कश्चिदपि जनः स्वरुचिमाधारीकृत्य कमपि व्यवसायं स्वीकर्तुमर्हति। अन्यः तस्य मार्गे बाधक न भवति।

३. बन्धुता –

समीचीनप्रजातन्त्रस्य एकः विशिष्टतमः सिद्धान्तः भवति– बन्धुत्वस्य भावना। प्रजातन्त्रदेशवासिनः मिथो बान्धवाः भवन्ति। परस्परं बन्धुत्वभावनां प्रकटीकुर्वन्ति।

४. न्यायसिद्धान्तः –

न्यायदृष्ट्या सर्वे समानाः, सः धनिकः वा दरिद्रो वा भवेत्। प्रजातन्त्रराष्ट्रे सर्वेषां समानरूपे न्यायं लभ्यते। विना वर्णादिभेदं सर्वेषां न्यायप्राप्तिः इत्येव न्यायसिद्धान्तस्य आशयः।

*** प्रजातन्त्रस्य मूल्यानिः –**

१. व्यक्तेः आदरः ।

२. सहनशीलता ।

३. परिवर्तने विश्वासः।

४. व्यवस्थितरूपेण परिवर्तनम्।

परिवर्तनं व्यक्तिषु बलात् न स्थापनीयमिति प्रजातन्त्रस्य विचारः। उत्तमे प्रजातन्त्रदेशे प्रत्येकमपि परिवर्तनं परस्परविचारविनिमयद्वारैव भवितुमर्हति। तथा च सर्वेषां सन्तुष्टिपूर्वकं सर्वसम्मतिश्च तत् परिवर्तनं भवति।

५. सेवा –प्रजातन्त्रस्य मूलमन्त्रं भवति – सेवा। व्यक्तिः समाजाय, समाजः व्यक्तयै च भवतः। प्रजातन्त्रं शक्तिमत् कर्तुं व्यक्तौ सेवाभावना आवश्यकी। जनजनार्दनसेवायै सर्वे सामाजिकाः अर्पिताः स्युः। "रायवर्न" महाभागःवदति यत् –"प्रजातन्त्रमेतादृशी व्यवस्था यत्र प्रत्येको जनः समाजस्य, तथा समाजः प्रत्येकस्य जनस्य अधिकाधिका सेवा करोति।"

६. वैयक्तिकोन्नतिः – तथा – सामाजिकोन्नतिः –

प्रजातन्त्रसमाजे व्यक्ति सामाजिकोन्नत्यै, समाजश्च व्यक्तेः उन्नत्यै सर्वदा प्रयत्नशिलौ भवेतामिति प्रजातन्त्रस्य विचारः। यत्रोभयोः उन्नतिर्भवति, तदेवोचितं प्रजातन्त्रात्मकं समाजम्।





*** प्रजातन्त्रसफलतायै शिक्षायाः आवश्यकता –**

शिक्षाक्षेत्रे प्रजातन्त्रसिद्धान्तानां, मूल्यानाञ्च समावेशः इदमिदानीं आरब्धम्। अस्य परिवर्तनस्य श्रेयः "जान डीवी" महाभागस्य भवति। स वदति – प्रजातन्त्रसमाजे एतादृशी शिक्षा भवेत्, यया प्रत्येकः जनः सामाजिककार्याणि, सामाजिकसम्बन्धांश्च स्वीयरुचेः अनुसारं स्वीक्रियेत इति। "DEMOCRACY AND EDUCATION" इति ग्रन्थस्य प्रणेता भवति "जॉन डिवी।"

"जॉन डिवी" कथनानुसारमेव प्रजातन्त्रसिद्धान्तानां, मूल्यानाञ्च प्रयोगः शिक्षाक्षेत्रे क्रियते। फलतः अद्य प्रतिदिनं जनसाधारणशिक्षान्दोलनं कुत्रचित् दृश्यते। एतत्समीचीनमेव। यतः यदा जनः शिक्षितः भवति तदैव स्वीयाधिकारेषु कर्तव्येषु च जागरूको भवति। अशिक्षिता जनता स्वीयाधिकारान् कर्तव्यांश्च न जानाति नावगच्छति।

किञ्च प्रजातन्त्रे राष्ट्रे सर्वे नागरिकाः शासने भागं गृह्णीयुरेव। अतः शिक्षया जनेषु न्यूनातिन्यूनं एषा योग्यता उत्पादयनीया यत् जनः मतदानमहत्त्वं अवगच्छन् स्वीयकर्त्तव्यानां एवं उत्तरदायित्वानां सफलं पुरयेत्। अद्य प्रजातन्त्रस्य रक्षायै प्रत्येकस्मिन् प्रजातन्त्रे राष्ट्रे सर्वसाधारणायाः निःशुल्कायाश्च शिक्षायाः व्यवस्था वर्तते।

*** शिक्षायां प्रजातन्त्रम् –**

प्रजातन्त्रे प्रजातन्त्रविचारधाराणां प्रभावः शिक्षायाः एतेषु क्षेत्रेषु निम्नलिखितेषु भवति।

१. समानावसरप्रदानम् ।

२. वैयक्तिकविभिन्नतानां आदरणम् ।

३. सार्वभौमिका तथा अनिवार्या शिक्षा ।

४. निःशुल्कशिक्षा ।

५. प्रौढशिक्षा – स्त्रीशिक्षा– विकलाङ्गानां शिक्षायै पृथग्व्यवस्था ।

६. बालकेन्द्रिता शिक्षा (प्रजातन्त्रविचारधाराप्रभावेणैव शिक्षायां बालकस्यैव प्रधानता स्वीकृता)

७. वैयक्तिकावधानस्य महत्वम् ।

८. सामाजिकक्रियाः ।

न केवलं पुस्तकीयमेव ज्ञानं दीयते इदानीं विद्यालयेषु, अपि च सामाजिकक्रियाणां सामाजिकतत्त्वाना च मुख्यं स्थानं दीयमानं दृश्यते। येन प्रत्येकः बालकः सामाजिकमनुभवं प्राप्नोति।

९. छात्रपरिषद् ।

१०. शिक्षकव्यक्तित्वस्य सम्मानम् ।

११. विद्यालयप्रशासनम् ।

१२. बालकस्य शारीरिकं स्वास्थ्यम् (वर्धनाय विद्यालये क्रीडाः, क्रीडाप्रतियोगिताश्च आयोज्यन्ते)

*** प्रजातन्त्रीयशिक्षायाः उद्देश्यानि –**

१. प्रजातन्त्रमूल्यानां विकासः, पालनञ्च।

२. उत्तमाभिरूचीनां विकासः।

अभिरुचयः बालकस्य चरित्रनिर्माणं कुर्वन्ति। किञ्च तद्बालकस्य जीवनं सम्पन्नमयं करोति। अत एव "हर्बर्ट्" महोदयः रुचीनां विकासविषये बलं दत्तवान्।

# श्रीमद्भगवद्गीतानुसारं शिक्षणपद्धतिः

**बिनता टप्पो**

शिक्षाचार्यः (प्रथमवर्षम्)

अनुक्रमाङ्कः- ०३

महाभारतस्य एकः अंशः भवति श्रीमद्भगवद्गीता। अत्र भगवान् श्रीकृष्णः प्रियसखा अर्जुनाय शिक्षां दत्तवान् । यतो हि अस्यां सर्वाभ्युपगतशिक्षासिद्धान्तानां समाहारः उपलभ्यते। भारतीयशिक्षादर्शनस्य सारः अत्रैव अवलोकयितुं शक्यते। दर्शनेषु निवृतिमार्गः प्रवृत्तिमार्गः इति द्वौ मार्गौ दृश्यतः। दृष्ट्या प्रवृत्तिमार्गस्य महत्त्वमधिकं भवति। निवृत्तिमार्गः प्रायशः संन्यासमार्गः भवति। अत एव शिक्षा केन्द्रिकृत्य भगवान् श्रीकृष्णः प्रवृत्तिप्रधानीभूत रणभूमिमचिनोत्। शिक्षायाः परिभाषा ज्ञानव्याख्याने एव निहिता





वर्तते। गीतायाः अनुसारं शिक्षायाः परिभाषा एवं भवति –"या प्रत्येकं व्यक्तिषु निहित ब्रह्मणः अथवा परमात्मनः अनुभूतेः सहायिका भवति सा शिक्षा।"

शिक्षाद्वारा एव आत्मनः अनुभूतिः भवति। यस्य ज्ञानचक्षुषः उन्मीलनं भवति तेनैव किल अन्तरात्मनः दर्शनं कर्तुं शक्यते। "विमूढा नानुपश्यन्ति" इत्युक्तरीत्य सर्वप्राणिषु विद्यमानपरमात्मनः दर्शनं विना ज्ञानस्य पूर्णता नैव भवति।

**शिक्षणपद्धतिः –**

शिक्षणविधिषु द्वे प्रमुखमनोवैज्ञानिकतथ्ये प्रतिविम्बिते स्याताम्। प्रथमशिक्षणविधिः सप्रयोजनः स्यात्। एवं छात्रसहजप्रवृतीनां रूचीनां उपरि आधारितः स्यात्। प्रकृतेः अनुसारं छात्राः त्रिधा विभक्तुं शक्यते –

१. ज्ञानप्रधानप्रकृतयः । २. भावप्रधानप्रकृतयः । ३. कर्मप्रधानप्रकृतयः ।

छात्रानुरूपं शिक्षणविधिरपि त्रिप्रकारः स्यात् –

१. ज्ञानात्मकः । २. भावात्मकः । ३. क्रियात्मकः ।

यः छात्रः तथ्यानि एकीकर्तुं विश्लेषणं कर्तुं तर्कितुम्, अवबोधनं प्राप्तुं च सक्षमः भवति तस्मै ज्ञानात्मकविधिः उपयोक्तव्यः। अस्मिन्नेव विधौ श्रवण-मनन-निदिध्यासनादयः भवति।

यस्य छात्रस्य भावनात्मकप्रकृत्तिः भवति, तस्मै बुद्धिप्रधानीभूता तार्किकप्रणाली नोपयुक्ता भवति। एतादृशः छात्रः ज्ञानम् आनन्दानुभूत्यर्थं गृह्णाति, न तु तार्किक विवेचनार्थम्।

छात्रः कर्मद्वारा अत्यन्तसरलतया ज्ञानमवगच्छति इति कृत्वा अभ्यसनमिति विधिः तस्य कृते अत्यन्तलाभकारी भवति।

एक एव बालकः भिन्नावस्थासु तिस्रः प्रकृति अपि प्रकटयति –

I. बाल्यावस्थायां क्रियाद्वारा सरलतया शिक्षाग्रहणं कर्तुं शक्नोति। अस्मिन् वयसि स्व अनुभवद्वारा शिक्षणं प्राप्तुमवसरः दातव्यः।

II. उत्तरबाल्यावस्थायां क्रियाद्वारा शिक्षया साकं अध्यापककथनद्वारा, पुस्तकपठनद्वारा, पर्यावरणद्वारा च ज्ञातुं शक्यते। अस्मिन् स्तरे श्रद्धापूर्वकं विवेचनपूर्वकं च ज्ञानग्रहणं नैव भवति। यत् पुस्तके लिखितं वर्तते तत्सर्वं जानाति। अत्र विद्यार्थी शङ्का नैव करोति। अपि तु तर्केण विना शिक्षकवचनानुसारं कार्यं करोति। इयम् अवस्था अनुकरणप्रधानं भवति।

III. किशोरावस्थायां तार्किकबुद्धेः विकासो भवति। छात्रः अध्यापककथनविषये पुस्तकीयज्ञानविषे
च शङ्कां करोति एवं तर्कवितर्काभ्यां ज्ञानमर्जयति।

अवस्थाविशेषे व्यक्तिविशेषे विषयविशेषसन्दर्भे वा एक एव विधिः यदि प्रधानः भवति त
इतरविधिद्वयं गौणरूपेण भवति।

गीतायाम् उक्तमस्ति – **"योगः कर्मसु कौशलम्"** अर्थात् कर्मणः कुशलतापूर्वकसम्पादनं समन्वयरूपव्यवहा
दरीदृश्यते। गीतायाः तृतीय–चतुर्थ–पञ्चमाध्यायेषु त्रिपिकारकविधीनां विवेचनम् उपलभ्यते।

# भजगोविन्दम्

**गौराङ्गकह**

शिक्षाशास्त्री (द्वितीयवर्षम्)

अनुक्रमाङ्कः –४२

आचार्यशङ्करः एकदा स्वशिष्यैः सह गच्छन् श्रुतं यत् एकः वृद्धः व्याकरणनियमान् कण्ठस्थ
करोति। मरणसमये व्याकरणे पारदर्शितया को लाभः इति न चिन्तयति सः वृद्धः। तस्य अविवेकिताय
शङ्करः उपहासेन "भजगोविन्दम्" रचितवान्। "भजगोविन्दम्" शङ्करस्य रचनासु क्षुद्रभूते सति अतीव
उपादेयं सारगर्भकञ्च। वेदान्तस्य मूलतत्त्वम् अति सरलभाषया अत्र व्याख्यातं शङ्करेण। अत्र एकत्रिंशत्
श्लोकाः सन्निवेशिताः। एकस्मिन् श्लोके शङ्करेण प्रोक्तम् –

बाल्यकालः क्रीडायां, यौवनं तरूण्याम् आसक्तौ, एवं च वृद्धावस्था प्रपञ्चचिन्तायांयापयति।
मनुष्येण कदापि गोविन्दस्य चिन्तनं न क्रियते।

**बालस्तावत् क्रीडासक्तः**

**तरूणस्तावत् तरूणीसक्तः।**

**वृद्धास्तावत् चिन्तासक्तः**

**परमे ब्रह्मणि कोऽपि न सक्तः।।**

भारतीयदर्शनेषु धनम्, यशः, कामनावासनादीनां पश्चाद्धावनं कर्तुं न प्रवर्त्तते। शङ्करः कथयति –

**मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम्।**





पुनः कथयति –

**मा कुरु धनजनयौवनगर्वं हरति निमेषात् कालः सर्वम्।**

जीवनं क्षणस्थायि वर्तते। पद्मपत्रे जलबिन्दुवत् –

**नलिनीदलगतजलमतितरलं**

**तद्वज्जीवितमतिशयचपलम्।**

क्षणस्थायिनि जीवनेऽस्मिन् भगवत् चिन्तनद्वारा प्रकृतशक्ति जीवनस्य परमलक्ष्यं मुक्ति लब्धुं शक्यते।

**का ते कान्ता कस्ते पुत्रः**

**संसारोऽयमतीव विचित्रः**

**कस्य त्वं कः कुतः आयातः**

**स्तत्त्वं चिन्त्य तदिह भ्रातः।।**

श्लोकेस्मिन् शङ्करेण अभिहितं यत् संसारः एवं च जीवनं प्रति अतिशयासक्तिः भवति चरममोहः।

**अङ्गं गलितं पलितं मुण्डं**

**दशनविहीनं जातं तुण्डम्।**

**वृद्धो यदि गृहीत्वा दण्डं**

**तदपि न मुञ्चत्याशापिण्डम्।।**

वृद्धावस्थायां शरीरं जीर्णं, इन्द्रियाणि शिथिलानि, चर्मः गलितं भवति। मुखः दन्तशून्यः भवति।
शरीरस्य भारसाम्यं न तिष्ठति। दण्डस्य आवश्यकता भवति।

राधाकृष्णन् महोदयः कथयति –

Desire is never satisfied by enjoyment of the objects of desire; it grows more and more as does the fire to which fuel is added.

पूर्वोक्तेषु श्लोकेषु आचार्येण सत्सङ्गस्य त्यागस्य च प्रशंसा क्रियते। भगवत्प्रीत्यै सर्वोच्चस्थानं
दीयते च। हृदयस्पर्शिभाषया सरलच्छन्दोमयपदैः च शङ्करेण भारतीयदर्शनस्य महत्त्वम् आदर्शं 'भजगोविन्दे'
उपस्थापितम्। एतत् न केवलं संस्कृतसाहित्ये, अपि तु विश्वसाहित्येऽञ्च एका विरला सृष्टिः।

*सन्दर्भग्रन्थः –* "भजगोविन्दम् श्रीशङ्कराचार्यकृतम्।"

# भारतीयशिक्षापद्धत्यां गुणदोषविमर्शः

## अरुपप्रधान

शिक्षाचार्यः (प्रथमवर्षम्

अनुक्रमाङ्कः -१

शिक्ष् धातोः भावे अ + टाप् = शिक्षा। तच्छास्त्रं शिक्षानाम येन वेदमन्त्राणामुच्चारणं शु सम्पाद्यते। वेदस्वरस्य प्राधान्यं सर्वविदितम्। अवर्णाद्युच्चारणप्रकारो शिक्ष्यते उपदिश्यते यत्र स शिक्षा। अतएव शिक्षाशास्त्रं वेदाङ्गम्। सायणाचार्यः कथयति यत् – स्वरवर्णाद्युच्चारणप्रकारो य शिक्ष्यते उपदिश्यते सा शिक्षा इति। शिक्षाशास्त्रस्य प्रयोजनमुक्तमस्ति तैत्तिरीयोपनिषदि यथा – अ शिक्षां व्याख्यास्यामः – वर्णः, स्वरः, मात्रा, बलम्, साम, सन्तान इत्युक्तः शिक्षाऽध्यायः।

**मन्त्रो हीनः स्वरतो वर्णतो व मिथ्याप्रयुक्तो न तमर्थमाह।**

**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।।**

(महाभाष्ये)

**शिक्षायाः स्वरूपम् –**

शिक्षा कीदृशी स्यात् इति प्रश्नः प्राक्कालादेव विचारचर्चाविषयः। **सा शिक्षा या विमुक्तये।** या इहलोक-परलोकोभयसाधनी सा विद्या। वैदिकसाहित्ये शिक्षास्वरूपविषये स्पष्टमुद्घोषितम्-

**आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छति**

(अथर्व – ११/५/७)

**विद्या शब्दस्यार्थः –**

विद् धातोः क्यप् प्रत्यये स्त्रीत्वात् टाप् प्रत्यये कृते विद्या शब्दो निष्पद्यते। विद्या शब्दस्य ज्ञानम् अर्थः। ज्ञानं च लौकिकमलौकिकं चेति द्विविधं भवति। तयोरेव पराविद्या अपराविद्या इति नाम्नी स्तः।

**विद्यायाः महत्त्वम् –**

मानवजीवने विद्यायाः महत्त्वमतीव वर्तते। सांसारिकपदार्थस्य आध्यात्मिक-तथ्यस्य च सम्यक् ज्ञानं विद्यारूपेण कथ्यते। अनेनैव कारणेन शास्त्रेषु कथ्यते –

**विद्ययाऽमृतमश्नुते, विद्यया विन्दतेऽमृतम्।**





विद्यायाः अभावे मनुष्यः पशुतुल्यः। विद्ययैव जनाः संसारेऽस्मिन् यशस्विनः सुखभागिनश्च भवन्ति। अनेनैव कारणेन महाकविना भर्तृहरिणा कथितम् –

**विद्यानाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं,**

**विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः।**

**विद्या बन्धुजनो विदेशगमने विद्या परा देवता,**

**विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः।।**

(भर्तृ, सु. सं – ७)

भारतीयसंस्कृतौ मानवजीवनं चतुर्षु आश्रमेषु विभक्तमस्ति। तेषु एव आश्रमेषु प्रथमो ब्रह्मचर्यः आश्रमो विद्यते, अस्मिन्नेवाश्रमे मनुष्यः गुरुसमीपं विनयेन गत्वा विद्यार्जनं कुरुते। विद्यार्थी जीवने सः अत्यधिकं श्रमं करोति। तदैव सः विद्यारत्नं लभते। तथा च उक्तं –

**सुखार्थिनः कुतो विद्या, कुतो विद्यार्थिनः सुखम्।**

**सुखार्थी वा त्यजेद् विद्यां, विद्यार्थी वा त्यजेत् सुखम्।।**

(सु. र. भा – १५८/२१६)

विद्या तु सर्वेषाम् आभूषणं विद्यते –

**नक्षत्र भूषणं चन्द्रो नारीणां भूषणं पतिः।**

**पृथिव्या भूषणं राजा विद्या सर्वस्य भूषणम्।।**

(चाणक्य – ८)

यः स्वबालानां शिक्षा व्यावस्थां न करोति सः पिता अपि शत्रुः मन्यते। उक्तमपि –

**माता शत्रुः पिता वैरी येन बालो न पाठितः।**

**न शोभते सभामध्ये हंसमध्ये बको यथा।।**

(चाणक्य – १/११)

**विद्यायाः उद्देश्यानि –**

अत्रेदं विचारणीयं भवति यत् के के शिक्षाया उद्देश्येभूता विषयाः यैः तत्र लोकोऽनुरज्यते। तदुच्चते –

**धर्मार्थकाममोक्षेषु यस्यैकोऽपि न विद्यते।**

**अजागलस्तनस्येव तस्य जन्म निरर्थकम्।।**

(ब्रह्माण्ड.पु. अ. – १२०)

**भारतीयशिक्षापद्धत्या गुणदोषविमर्शः –**

वर्तमानभारतीया शिक्षापद्धतिः वर्णादिभेदरहिता सर्वजनसुलभेत्येव सर्वोत्कृष्टगुणः।

| *प्रमुखाः दोषाः* | *दोष-परिष्काराः* |
|---|---|
| आध्यात्मिकब्रह्मचर्य – चरित्र – सत्यभाषणादि – गुणानाम् उपेक्षा। | आध्यात्मिकशिक्षा, पाश्चात्यप्रथा- वैरत्या ब्रह्मचर्यचरित्रसत्यभाषणादि गुणानामनुसरण संस्कृतवाङ्मयशिक्षणम्। |
| स्वार्थबुद्धेः, असंयमस्य, अनैतिकतायाः चाप्रतिहतः प्रसारः। | नैतिकशिक्षा, गुरुशिष्यसम्बन्धः, आचारशि भोगविलासे नियन्त्रणम् मातृवत् परदारेषु दर्शन धार्मिकग्रन्थानाम् अध्ययनम्। |
| परीक्षाणां दोषाकुलत्वम्। परीक्षाविधेः दूषिता प्रणाली। | शैक्षिकस्तरोन्नयनम्, योग्यश्रेणीप्रापणम्, विषयावबोधने बलम्, विषयान् प्रति स्वाभाविकाभिरुचेः उत्पादनम्। |
| उपाधीनाम् अवमूल्यम्, जीविकाप्राप्तिः समस्योत्पादनम्। | शिल्पविषयाणां शिक्षणम्, अनुपयोगि विषय निःसारणम्, औद्योगिकं प्रशिक्षणम्, जातीयदोषनिराकरणम् । |
| दूषितराजनीतेः प्रवेशः। | राजनीति निष्कासनम्, क्रीडादीनां सुव्यवस्था देशभक्ति भावोदयः। |
| श्रमे श्रमसाध्ये कार्ये वाऽरुचिः | श्रममहत्त्वं शिक्षणम्, शोधप्रवृत्युद्भावनम्। |
| शिक्षाया अर्थकरीत्वाभावः | शिक्षायाः अर्थकरीत्वम्। |

**उपसंहारः –**

वस्तुतः भूमण्डलेऽस्मिन् यद्यपि सत्यं शिवं सुन्दरमस्ति, सर्वमेतत् विद्याया एव महनीयत्वं दृश्यते। विद्या मनुष्याय विनयं ददाति, विद्यया यशः प्राप्यते। विद्या सर्वेषां गुरुः अस्ति। विद्याहीनः जनः विद्वत्समाजे तथैव न शोभते यथा हंसमध्ये वको न शोभते। अतः अस्माभिः सदैव विद्यायाः प्राप्त्यर्थं प्रयत्नो विधेयः।





# भाषा चिन्तनं च

## (Language and Thought)

**ज्ञानेन्द्रगौतमः**

शिक्षाचार्यः (प्रथमवर्षम्)

**भाषा (Language) –**

भाषा भावाभिव्यक्तेः माध्यमः। मनुष्यः पशुभ्यः श्रेष्ठतमः यतोहि मनुष्येषु भावभिव्यक्तेः साधनं भावावबोधनसाधनञ्च वर्तते।

भाषा बौद्धिकक्षमतामभिव्यञ्जयति।

बहवः जनाः वाणीं भाषाञ्च परस्परपर्यायरूपं स्वीकुर्वन्ति परन्तु उभयोः मध्ये भिन्नता वर्तते। यथा –

१. भाषायाः सम्प्रेषणस्य तद् सर्वसाधनं भवति यत्र विचाराणां भावानाञ्च प्रतीकात्मकरूपं भवति यत्र विचारान् भावान् च अर्थपूर्णरूपेण प्रस्तूयते।

२. वाणी भाषायाः एकं स्वरूपं वर्तते यत्र ध्वनिद्वारा अर्थाभिव्यक्तुं शब्दा उच्चार्यन्ते।

अतः वाणी भाषायाः एकं विशिष्टमङ्गं वर्तते। भाषाव्यापकसम्प्रत्ययः वर्तते। वाणी भाषाया एकः माध्यमः वर्तते। बालकेषु भाषायाः विकासः (Language development in children)।

बालकस्य विकासस्य विभिन्नाः आयामाः भवन्ति। भाषायाः विकासः अपि तत्रैव निहितं वर्तते। भाषाऽपि अर्जितकौशलम् अस्ति। जन्मनः (जन्मान्तरम्) बालकस्य भाषायाः विकासः आरभ्यते। अनुकरणं, वातावरणेन सह अनुक्रिया तथा शारीरिक – सामाजिक – मनोवैज्ञानिक आवश्यकतानां पूर्तिः अत्र विशेषभूमिकां निर्वहन्ति।

**भाषाविकासस्य प्रारम्भिकावस्था** – अस्यामवस्थायां ध्वन्यात्मकसंकेतयुक्तभाषाम् अवबोधनाय प्रयोक्तुञ्च चेष्टां करोति यस्य अभिव्यक्तिः निम्नमाध्यमेन विभिन्नक्रियाभिश्च करोति।

बालकः जन्मानन्तरमेव आदौ रोदिति चित्कारयति च।

**रोदन** – चित्कारेण सहैव बालकः अन्यध्वनिं (Sound), अपि करोति। एताः पूर्णतया स्वाभाविक-स्वोच्चारित नैसर्गिकी च भवति।

अनुकरणक्रियाद्वारा बालकाः प्रतिक्रियां कुर्वन्ति।

हाव-भाव, इंगित-चेष्टितप्रक्रिया द्वारा अपि बालका भाषाविकासं सम्पादयन्ति।

**भाषायाः महत्त्वम् –**

इच्छानाम् आवश्यकतानां च सन्तुष्टिः इच्छा......... सन्तुष्टये भाषायाः महत्त्वं सर्वाधिकं वर्तते

ध्यानाकर्षयितुम् – बालकेषु इयं भावना भवति यत् सर्वेषां ध्यानं मयि भवेत् इति।

सामाजिकसंम्बन्धस्य कृते – मानवः सामाजिकप्राणी अतः सामाजीकरणाय भाषाया महत्त्वं वर्तते।

सामाजिकमूल्यांकनस्य कृते – बालकः समाजेन सह कथं संबंधितः वर्तते इति मूल्यांकनं कर्तुं भाषायाः महत्त्वं वर्तते।

आयु आधारेण बालकानां भाषाविकास:

| *बालकानाम् आयुः* | *बालकानां शब्दभण्डारः* |
|---|---|
| जन्मात् ८ मासपर्यन्तम् | ० |
| नवमासात् १२ मासपर्यन्तम् | ३ – ४ शब्दाः |
| १.५ वर्षपर्यन्तम् | १० –१२ शब्दाः |
| २ वर्षपर्यन्तम् | २७२ शब्दाः |
| २.५ वर्षपर्यन्तम् | ४५० शब्दाः |
| ३ वर्षपर्यन्तम् | १००० शब्दाः |
| ३.५ वर्षपर्यन्तम् | १२५० शब्दाः |
| ४ वर्षपर्यन्तम् | १६०० शब्दाः |
| ५ वर्षपर्यन्तम् | २१०० शब्दाः |
| ११ वर्षपर्यन्तम् | ५०००० शब्दाः |
| १४ वर्षपर्यन्तम् | ८०००० शब्दाः |
| १६ वर्षात् अग्रे | १ लक्षात् अधिकशब्दाः |





**भाषाविकासस्य प्रभावककारकाणि –**

१. स्वास्थ्यम्।
२. बुद्धिः।
३. सामाजिकार्थिकस्थितिः ।
४. लिंगीयभिन्नता ।
५. परिवारस्य आकारः ।
६. बहुजन्म ।
७. द्विभाषावादः।
८. परिपक्वता।
९. संवेगात्मकतन्यता ।
१०. व्यक्तित्वम् ।
११. प्रशिक्षणविधिः।

**चिन्तनस्य प्रकृतिः –**

१. चिन्तनमेका एतादृशी प्रक्रिया या सुषुप्तावस्थायामपि क्रियाशीला भवति।

२. चिन्तने कल्पना, भाषा, संकल्पना, प्रतिज्ञप्ति च सम्मिलिता वर्तते।

३. चिन्तनमेका जटिला मानसिकप्रक्रिया अस्ति यत्र सूचनानां कुशलतया उपयोगः भवति।

४. कालिन्स एवं ड्रेवर महोदयानुसारं – चिन्तनं जीव-शरीरयोः वातावरणं प्रति चैतन्य समायोजनमुच्यते।

५. चिन्तने नैका मानसिकक्रिया भवन्ति यथा – अनुमान-तर्क-कल्पना-निर्णय-अनुभूतीकरण-समस्या-समाधान-रचनात्मकविचारादयश्च।

६. चिन्तनस्य प्रारम्भ प्रायः एकया समस्यया जायते तथा विभिन्नेषु चरणेषु सम्पन्नो भवति। यथा – निर्णयसम्पादनम्, अनुमानकरणम्, संक्षिप्तिकरणम्, तर्ककरणम्, कल्पना एवं स्मरणम्।

**निष्कर्षः –**

अन्तर्निहित भावानभिव्यञ्जयितुं भाषा महत्त्वपूर्णं साधनमस्ति। आयुराधारित शनैः– शनैः भाषाविकासः सम्पन्नो भवति। भाषया सह चिन्तनमपि मानवानां सृजनात्मकशक्ति परिपक्वतां च सम्पादयति।

## रवीन्द्रनाथटैगोरस्य दार्शनिकचिन्तनं वर्तमानसन्दर्भे शिक्षायाः प्रासंगिता एकम् अध्ययनम्।

मानवः आरम्भादेव चिन्तनशील प्राणी अस्ति एतद् चिन्तनमेव दर्शनस्य मूलमस्ति। किमपि चिन्तनं कियदपि प्राचीनं भवतु तस्योपादेयता कदापि समाप्तं न भवति। रवीन्द्रनाथटैगोरः आधुनिकयुगस्य एकः महान् दार्शनिकः एवं शिक्षाशास्त्री आसीत्।

स्वस्य मौलिकैः एवं नूतनैः विचारैः भारतीयशिक्षायाः क्षेत्रे महत्त्वपूर्णयोगदानं अददत्। एषः स्वस्य भारतीयसंस्कृतेः आधारेण न केवलं भारतीयशिक्षायां भितिं स्थापितवान् अपितु पाश्चात्यशिक्षायामपि पूर्वः एवं पश्चिमस्य आदर्शानां नवरूपं प्रददत्। अनेन कारणेन इमं गुरूदेवमिति राष्ट्रपिता उच्यते।

एते स्वसन्दशे शिक्षायाः प्राकृतिकवातावरणस्योपरि बलं दत्तवन्तः अतः एषां शिक्षा प्रकृतिवादी अपि उच्यते जनैः।

टैगौरमहोदयेन शिक्षायाः क्षेत्रे प्रकृतौ विशेषमहत्त्वं प्रदत्तः। अनेन उक्तं यत् बालकान् पुस्तकीय ज्ञानेन सह प्रत्यक्षस्रोतसः अपि ज्ञानं दातव्यम्। टैगौरमहोदयानुसारेण सर्वोच्चशिक्षा सैव भवति या शिक्षा सम्पूर्णसृष्टेः अस्माकं जीवने सामञ्जस्यं स्थापयति। अध्ययनाध्यापनाय एषः स्वतन्त्रः एवं प्राकृतिकवातावरणं उपयुक्तम् एवं श्रेष्ठं मन्यते। अनेन कारणेन टैगोरमहोदयः १९०१ ईस्वीतमे बोलपूरस्थाने शान्तिनिकेतन इति नाम्ना एकस्य विद्यालयस्य निर्माणम् अकरोत् । यः अद्य विश्वभारतीविश्वविद्यालय इति नाम्ना प्रसिद्धमस्ति। अनेन शान्तिनिकेतने स्थित्वा गीताञ्जलि नाम्ना एकं ग्रन्थम् आलेखि। येन कारणेन अयं नोबेल पुरस्कार इति उपाधिना सम्मानितः अभवत् । एषः देशस्य प्रथमः नागरिकः अस्ति यः नोबेलपुरस्कारं प्राप्तवान्। एतद् विहाय एते इतोऽपि अनेकानि पुस्तकानि आलेखि। अनेकानां देशानां अभ्रमत् विभिन्नेषु विश्वविद्यालयेषु अनेन व्याख्यानं प्रदत्तम्। येन कारणेन एतेषां कृतिः इतोऽपि अधिकः वृद्धिः जातः।

टैगोरमहोदयस्य उपदेशः अनेकेषु क्षेत्रेषु प्रभावितः कृतः यथा बौद्धिकक्षेत्रेषु कलात्मकक्षेत्रेषु, सांस्कृतिकक्षेत्रेषु च । एतेषां व्यक्तित्वं महान् आसीत्।

**शोधस्यावश्यकता एवं महत्त्वम् –**

वर्तमानसमये शिक्षायाः स्तरेन्यूना जाता । अनया शिक्षया समाजः असम्यक् जायमानः वर्तते। विशेषतया छात्रेषु चरित्रं, दया, धर्मः, सेवाभावना च इत्यादयः गुणाः नैव वर्तन्ते। अस्य कारणमस्ति या शिक्षाप्रणालिव्यवस्था अस्ति तत्र गुणाः अपेक्षिताः न चेत् टैगोरमहोदयस्य शिक्षापद्धतिः स्वीकरणीया।

पं. नेहरुमहोदयेन उक्तं यत् – शिक्षा सन्तुलित मानवस्य विकासं करोति। शिक्षायाः माध्यमेन अस्माकं देशस्य विद्यार्थीषु सम्यक् गुणाः आनेतव्याः । अतः वर्तमानसमये अस्माकं देशे टैगोरमहोदयस्य शिक्षाप्रणाल्याः आवश्यकता वर्तते।





**शोधसमस्या –**

वर्तमानसमये मानवानां समीपे उत्तमगुणानां ह्रासः जायमानाः वर्तन्ते। विद्यार्थिनः असम्यक् आचरणं कुर्वन्ति। गुरुन् आदरभावं न प्रकटयन्ति, धूम्रपानं कुर्वन्ति, समाजभ्रष्टः जायमानः वर्तते । यदि रवीन्द्रनाथमहोदयस्य शिक्षाप्रणालिं स्वीकुर्मः चेत् एतासां समस्यानां समाधानं भवितुमर्हति। टैगोरमहोदयः मनुष्यान् ईश्वरस्य रूपं मन्यते अतः वर्तमानसन्दर्भे टैगोरस्य दार्शनिकचिन्तनं मनुष्यैः प्रकृतादिभिः सह शिक्षायाः घनिष्टसम्बन्धमेव शोधस्य समस्यास्ति।

**शोधस्य उद्देश्यम् –**

प्रस्तुतानुसंधानस्य निम्नलिखितानि उद्देश्यानि सन्ति –

१. टैगोरस्य ग्रन्थलेखाः, व्याख्यानानि एवं साहित्यिकरचनादयः दर्शनिकम्शैक्षिकतथ्यानि विश्लेषयन्ति।

२. टैगोरेण प्रतिपादितानि शैक्षिकोद्देश्यानि, पाठ्यक्रमः, शिक्षणविधिः एवं शिक्षकाः तथा शिक्षार्थिनः सम्बन्धः तथा अनुशासनादीनां सम्बन्धितविचारस्याध्ययनं करणीयम्।

३. टैगोरस्य दार्शनिकचिन्तनं विश्लेषणं कुर्वत् तेषां वर्तमानसमये शिक्षां प्रति आधुनिकदृष्टिकोणस्य महत्तायाः विश्लेषणं करणीयम्।

४. टैगोरशिक्षायाः परम्परागतस्वरूपं प्रकृतिकवातावरणेन सह योजयित्वा बालकेषु शिक्षां प्रति उचितदृष्टिकोणं भवेत्।

**शोधसीमांकनम् –**

कोऽपि अनुसन्धानं वैधः, विश्वनीयः, तार्किकपर्यन्तं च नेतुं समस्यायाः सीमांकनमावश्यकं भवति। प्रस्तुतशोधकार्ये रवीन्द्रनाथटैगोरस्य दार्शनिकचिन्तनम् आधारेण स्वीकृतम् । प्रमुखरूपेण तेन सम्बन्धितग्रन्थः साहित्यव्याख्यानस्य उपयोक्तुं तेषां आधुनिकदृष्टिकोणानां शैक्षिकविचाराणां च वर्तमानसन्दर्भे प्रासङ्गिकतायाः अध्ययनं अस्य शोधस्य सीमाङ्कनं भवति।

**शोधविधिः –**

टैगोरः शोधविधिं जीवनस्य वास्तविकपरिस्थितेः कृतेः वास्तविकं तथ्यम् एवं समाजस्य वास्तविकजीवनं अनुकूलं कर्तुं बलं दत्तवान् । तस्यानुसारेण अतीतस्य दृष्ट्या दार्शनिकचिन्तनम् एवं शिक्षायाः वर्तमानसन्दर्भस्य प्रासंगिकतायाः अध्ययनम् उत् सर्वेक्षण प्रयोगम् अन्यविधिना नैव कर्तुं शक्यते । अतः प्रस्तुतशोधप्रबन्धस्य विधिः पुस्तकालयाध्ययनस्योपरि आधारितं न भूत्वा एषः

प्राकृतिकवातावरणस्योपरि बलं दत्तः येन बालकः शीघ्रतया एवं प्रत्यक्षरूपेण ज्ञायते। एतद् [illegible]
दार्शनिक समस्यासमाधानमूलकमपि अस्ति।

**शोधप्रकरणम् –**

प्रस्तुतशोधः दार्शनिकचिन्तनस्योपरि आधारितः अस्ति। ग्रन्थालयः प्रमुखस्रोतरूपेण स्वीकृत
टैगोरसम्बन्धितविशेषग्रन्थानाम्, विश्वकोषानां, सन्दर्भग्रन्थानाम्, लेखसाप्तहिकानां, मासिकवार्षिकपत्रपत्रिका
च माध्यमेन शोधकार्यं पूर्णरूपेण प्रयासं कृतम्।

**परिणामः चर्चा च–**

रवीन्द्रनाथस्य दार्शनिकचिन्तमेव शिक्षायां सम्पूर्णमानवजात्यै अस्ति। तेषां शिक्षा सार्वभौमि
एवं ताः मानवीयमूल्यान् प्रतिपादयन्ति । यस्याः उपादेयता सर्वेभ्यः अस्ति यदि बालकान् आदर्शनागरिक
निर्माणं कर्तुं तेषु सम्यक् संस्कारः विचारेषु परिवर्तनम्, परिमार्जनं तथा-च परिवर्धनम् आनेतव्यम्

टैगोरानुसारेण बालकान् केवलं पाठ्यपुस्तकं न पाठनीयं यतोहि शिक्षया सह अन्यविषयः अ
पाठनीयः। टैगोरस्य शिक्षायां नैतिकतायाः पाठं पाठयित्वा नैतिकतायाः अभावे कोऽपि व्यक्तिः समाजस
अथवा राष्ट्रस्य उन्नतिं न कर्तुं शक्नोति। टैगोरः बालकान् कठोरदण्डदातुं निराकरोति ।

**टैगोरमहोदयानुसारेण –**

शिक्षां केवलं शिक्षकैः एव दातुं न शक्यते अपितु शिक्षाविधिना अपि दातव्या । शिक्षकेषु सेवा
त्यागः, सहयोगः, प्रसन्नताः, कर्तव्यपरायणतादयः गुणाः भवेयुः येन विद्यार्थिनः प्रभाविताः भवेयुः।

टैगोरमहोदयेन एतादृशस्य शिक्षणविधेः उपरि बलं दत्तवान् येन बालकस्य जिज्ञासा तथा रुचि
निरन्तरं वर्धेत् ।

टैगोरमहोदयस्य शिक्षणविधयः निम्नलिखिताः सन्ति –

१. भ्रमणसमये पाठनीयम्।

२. क्रियाविधिना पाठनीयम् ।

३. वादविवादः तथा प्रश्नोत्तरविधिनापाठनीयः ।

यद्यपि टैगोरमहोदयस्य समये शिक्षायाः स्तरा सुदृढा ना आसीत् । अतः तेषां ये विचाराः यानि
वैज्ञानिकचिन्तनानि आसन्तानि सर्वाणि शिक्षायाः प्रत्येकक्षेत्रं प्रभावयन्ति स्म्। रवीन्द्रनाथमहोदयस्य
आध्यात्मिकशिक्षा एवं नैतिकशिक्षा सार्वभौमिकी तथा मानवीयमूल्यान् प्रतिपादयति स्म । यस्याः
उपयोगिता एवं सार्थकता प्रत्येकदेशस्य कृते आवश्यकम् अस्ति।





**निष्कर्षः –**

निष्कर्षरूपेण एवं वक्तुं शक्यते यत् टैगोरमहोदयस्य शिक्षा भारतीयाधारेण राष्ट्रीयशिक्षायाः
आधारं स्थापितवन्तः । टैगोरानुसारेण शिक्षायाः स्वरूपम् अर्थः समृद्धः चास्ति ।

**सन्दर्भग्रन्थाः–**


१. गुप्ता एस.एवं पी.गुप्ता अलका भारतीयशिक्षा का इतिहासः विकास एवं समस्यायें, शारदा पुस्तक भवन युनिवर्सिटी रोड इलाहबाद – २११००२ ।

२. लाल एवं तोमर(प्रो. रमन बिहारी लाल, डाँ. गजेन्द्र सिंह तोमर)विश्व के श्रेष्ठ शैक्षिक चिन्तक, आर लाल वुक डिपो निकट गवर्नमेन्ट इण्टर कालेज मेरठ २५०००१ संस्करण २००८।

३. पी. डी. पाठक, जी. एस. डी त्यागी ,शिक्षा के सामान्य सिद्धान्त प्रकाशक विनोद पुस्तक मंदिर, आगरा – २ ।

४. सक्सेना स्वरूप एन. आर. शिक्षा सिद्धान्त. आर. लाल वुकडिपो, मेरठ।

५. पचौरी गिरीश एवं पचौरी रितु – उभरते भारतीय समाज में शिक्षक की भूमिका ,आर. लाल बुक डिपो, मेरठ ।


# वाग्विचारः


**गणेश्वरबिश्वालः**

शिक्षाचार्यः(प्रथमवर्षम्)


वेदाः भारतीयसंस्कृतेः प्राणस्वरूपाः। अतः भगवता पतञ्जलिना स्वकीये महाभाष्ये उक्तम् – ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयः ज्ञेयश्च वेदस्य षडङ्गानि विद्यन्ते।

**"छन्दः पादौ तु वेदस्य, हस्तौ कल्पोऽथ पठ्यते,**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।**
**शिक्षा घ्राणं तु वेदस्य, मुखं व्याकरणं स्मृतं,**
**तस्मात् साङ्गमधीत्यैव, ब्रह्मलोके महीयते।।"**

(पा. शि. – ४१/४२)

अत्र **'मुखं व्याकरणं स्मृतम्'** इति उद्घोषयता शिक्षाकारेण षडङ्गेषु व्याकरणस्य प्रामुख्यत्वं प्रतिपाद्यते। प्रधाने च कृतो यत्नः फलवान् भवति इति भाष्यवचनात् ज्ञायते सर्वशास्त्रोपकारकमिदं

व्याकरणशास्त्रम्। निखिलेऽस्मिन् संसारे प्रायशः प्राणिनां सर्वः व्यवहारः शब्देनैव प्रचलति। यद्यपि सङ्केतेन क्रियते तथापि तत्र ध्वन्यात्मकः शब्दः अनुभूयते। किञ्च यदा मनुष्यः कथितभाषया लिखितभाषया वा भावं प्रकाशयितुमिच्छति तदा शब्दमाध्यमेन स्वकीयभावं प्रकाशयति। अतएव अयं सिद्धान्तः शब्दादेव लोकयात्रा प्रारभ्यते इति। भर्तृहरिणा उक्तं च-

**"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।"**

(वा. प. - १/१२३)

अस्य शब्दशास्त्रस्य द्विविधं स्वरूपं विद्यते। दर्शनरूपं प्रक्रियारूपञ्च। प्रक्रियांशे व्यवहारार्थप्रकृतिप्रत्ययानां विचारः दृश्यते। दर्शनांशे शब्दस्य तात्त्विक्यालोचना विहिता। नामरूपे व्याकरणवाणी (छा. उ - ६/३/२२) इत्युक्तिः व्याकरणस्य दर्शनत्वं सूचयति। जगत्सृष्टेः परमकारणभूता अनादिनिधन-शक्तिः शब्दतत्त्वात्मिका एव। अतः भर्तृहरिणा वाक्यपदीय-ब्रह्मकाण्डे प्रथमश्लोके लिखितम् -

**अनादि निधनं ब्रह्मशब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**

व्याकरणशास्त्रस्य तथा तन्त्रशास्त्रस्य अध्ययनात् ज्ञायन्ते चतस्रः वाचः सन्ति। परा, पश्यन्ती, मध्यमा, वैखरी इति। किञ्च शारदातिलके लिखितमस्ति (१/१/१२ पदार्थदर्शकारका) बिन्दुनामकमूलतत्त्वमेव तत्तत्स्थानेषु तत्तत् आख्यां धत्ते। अतएव असौ एव बिन्दुः स्थानान्तर्गतः पराद्याख्यः एव। प्रपञ्चसारतन्त्रेऽपि वर्णितमस्ति -

**मूलाधारा प्रथममुदितो यस्तुभावः पराख्यः,**
**पश्चात् पश्यन्तथ हृदयगो बुद्धियुङ्मध्यमाख्यः।**
**वक्त्रे वैखर्य्य रूरूदिषोरस्य जन्तोः सुषुम्ना,**
**बद्धस्तस्मात् भवति पवनप्रेरितो वर्णसंघः।।**

(प्रपञ्चसारतन्त्र - २/४३)

अतः नागेशेन लघुमञ्जुषायां स्फोटप्रकरणे उक्तं यत् -

**परावाङ् मूलचक्रस्था, पश्यन्ती नाभिसंस्थिता।**
**हृदिस्था मध्यमा ज्ञेया, वैखरी कण्ठदेशगा।।**

(प. ल. स.)





**वैखर्या हि कृतो नादः परश्रवणागोचरः।**
**मध्यमायाः कृतो नादः स्फोटव्यञ्जक उच्यते।।**
**वैखर्या मध्यमायाञ्च प्रश्यन्त्याश्यैतददभूतम्।**
**अनेकतीर्थ भेदायाश्रय्य वाचः परं पदम्।।**

(वाक्यपदीयम्)

**परा -**

महाभारते परावाणीं स्वरूपज्योतिः तथा अनपायिनी इति कथ्यते। अतः लिखितमस्ति- **"स्वरूपज्योतिरेवान्तः सूक्ष्मावाग् अनपायिनी।"** (वा. पदीयस्य स्वोपज्ञटीका -१/१४३) परावाणीविषये वाक्यपदीयस्य स्वपज्ञटीकायां लिखितमस्ति परावाणी पश्यन्त्याः प्रकृष्टरूपा अपभ्रंशरहिता तथा लोकव्यवहारेति। अतः उक्तम् -"परन्तु पश्यन्ती रूपम् अनपभ्रंशगं असङ्कीणं लोकव्यवहारातीतम्।" अस्याः टीकायाः अन्यस्थले परावाङ्मूलावस्था इति भर्तृहरिणा अङ्गीकृतम्। तत्र परायां सर्वेषां विकाराणां शान्तिः भवति।

अस्याः वाचः विषये नागेशभट्टेन परमलघुमञ्जुषायाः स्फोटप्रकरणे लिखितम् -"सा मूलाधारस्य पवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परावागुच्यते।"

वस्तुतः भारतीयऋषीणामिदं मतं यत् - वाचः सूक्ष्मतमरूपं परमरहस्यभूतम् इदं तव मानवशरीरस्य मूलाधारचक्रे कुण्डलिनीरूपेण अवतिष्ठते। इमां वाचम् आत्मा चित्संवित इत्यादिरूपेणा भिधीयते। इयं परावाणी जगतः उपादानकारणम्। एषा सूक्ष्मस्फोटः इति उच्यते। प्राणवायुसंयोगेन पश्यन्ती- मध्यमा- वैखरी- भेदेन अस्याः विवर्त्तनम्। इयं परा निष्पन्दरूपा। अन्याः वाचः सस्पन्दाः।

भर्तृहरिणा तिस्रः वाचः प्रतिपादिताः। तस्मात् ज्ञायते परावाक् न व्याकरणगम्या। नागेशेन महाभाष्यस्य उद्योतटीकायां (महाभाष्य . २, पृ- ३२) लिखितम् - हृदयदेशस्य पदप्रत्यक्षानुपपत्या व्यवहारकारणं पश्यन्ती तु लोकव्यवहारातीता। योगिनां तु तत्रापि प्रकृतिप्रत्यय विभागरहितोऽस्ति। परायां तु न विभागः अतः तिस्रः वाचः इति निगदितम् । तथाहि प्रत्यस्तमित- सर्व- विकारोल्लेख- मात्रा- परं प्रकृतिः प्रतिपाद्यते।

**पश्यन्ती -**

पश्यन्त्यां वाचि वाणी अविभक्ता सति तिष्ठति। तत्र वर्णानां पौर्वापर्य्यभावस्य अभिव्यक्तिः न भवति। अस्यां सर्वेषां पदार्थानां तथा अर्थानां प्रकाशः जायते। अतः इयं पश्यन्तीतुच्यते। अस्मिन्

विषये (हरिवृषभकृतस्वपज्ञवृत्तौ १/१/३३) लिखितम् –"सा परिच्छिणार्थप्रत्यवभासा संसृष्टर्थप्रत्यावश्या प्रशान्तवार्थ प्रत्यवभासा चेत्यपरिमाणभेदा"।

नागेशः लिखति स्फोटप्रकरणे परमलघुमञ्जुषायां – नाभिपरय्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्तीवागुच्यते। परा-पश्यन्ती इत्येतद्वयं वाग्ब्रह्म योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषयः इत्युच्यते।

**मध्यमा –**

इयं मध्यमावाक् श्रोत्रग्रहणयोग्यत्वेन सूक्ष्मा। मध्यमानादः अर्थवाचकस्फोटात्मकशब्दस्य व्यञ्जकः स्फोटः व्यङ्ग्यः अयं स्फोटः ब्रह्मरूपः नित्यश्च।

वाक्यपदीयस्य स्वपज्ञटीकाकारः(वा. प – १/२/३३) लिखति – मध्यमा तु अन्तः सन्निवेशिनी परिगृहीतक्रमेव बुद्धिमात्रोपादना। सा तु सूक्ष्मप्राणवृत्यनुगता। क्रमसंहाराभावे अपि व्यक्तप्राण–परिग्रहैव केषाञ्चित्।

अस्या वाचः विषये नागेशः परमलघुमञ्जुषायां स्फोटप्रकरणे लिखितमस्ति ततः हृदय–पर्य्यन्तमागच्छ तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिग्राहया मध्यमावागुच्यते।

**वैखरी –**

इयं वैखरी वाक् कण्ठदेशे एव। वैखरी शब्दः विखरशब्दात् निष्पन्नः। वैखरीविषये शास्त्रकारैः विभिन्नाः अर्थाः स्वीकृताः। यथा–

१. विखरः– शरीरं तत्र भवातत्पर्यन्तं चेष्टा सम्पादिकेत्यर्थः। (अभिनवगुप्तः, ईश्वरप्रत्यभिज्ञावृतिविमर्शनी, भागः ३, पृ –१८७)

२. वक्तृभिः विशिष्टायां खरावस्थायां स्पष्टरूपायां भवा वैखरी। (वादिदेव सुरिः, स्याद्वादरन्ताकरः – १/७ , पृ. – ८७)

३. विखर इति देहेन्द्रियसंधात उच्यते, तत्र भावा वैखरी।(जयन्तभट्टः न्यायमञ्जरी, पृ – ३४३)

४. विशिष्टं खमाकाशं मुख्यरूपं राति गृह्णाति इति विखरः। प्राणवायुसञ्चारविशिष्टः वर्णोच्चारणः तेनाभिव्यक्ता वैखरीति। (जयरथः, अल??कारसर्वस्व टीका, पृ. – ४३)

इयं परश्रवणागोचरा, भेर्यादिवत्रिरर्थका। अस्याः विषये नागेशः लिखति स्फोटप्रकरणे परमलघुमञ्जुषायां तत् आस्य पर्यन्तमागच्छता, तेन वायुनार्ध्वमाक्रामता च मुर्धानमाहत्य परावृत्त च





तत्तत्स्थानेष्वाभिव्यक्ता परिश्रोत्रेणापि ग्राह्या वैखरी वागुच्यते। वाक्यपदीयस्य स्वपज्ञटीकायामपि लिखितम् – परैः संवेद्य यस्याः श्रोत्रविषयत्वेन प्रतिनिमित्तं श्रुतिरूपं सा वैखरी। शिलष्टा व्यक्तवर्णसमुच्यारणा प्रसिद्धसाधुभावा भ्रष्टसंस्कारा च, तथा या अक्षे या दुन्दुभौ या वेणौ या वीणायामित्यपरिणामभेदा।

**समीक्षा –**

वाग्विषयानुशीलनात् ज्ञायते सर्वेषां मनुष्याणां मध्यमावैखर्य्या अनुभवः भवत्येव। यतः वैखरी–वाचा सर्वे स्वकीयभावम् अन्यसमीपे प्रकाशयन्ति। अतः "वैखरीध्वनिः परश्रवणगोचरः" इति वाक्यं समीचीनं प्रतिभाति। मध्यमा वागपि सर्वैः अनुभूयते। यतो हि यदा मुखपिधानं कृत्वा जपादिकार्यं क्रियते तदा हृदयस्थानात् वाक् निःसरति इत्यनुभवः जायते एव। पश्यन्ती वाक् तु सूक्ष्मानुशीलनेन ज्ञायते एव। यदा 'ऊँ' कारस्योच्चारणं यथा रीति क्रियते तदा नाभिप्रदेशतः वाचः प्रतीतिः भवत्येव। परा तु निर्विकल्पकसमाधौ प्रतिभाति। नागेशभट्टमते परावाक् मायाशक्तेः अवस्थाविशेषा। तेन सा वाक् सान्तत्वेन स्वीकृता। परन्तु भर्तृहरिणा परावाक् ब्रह्माभिन्नशक्तिरूपेणा स्वीकृता। तस्य परावाक् साक्षात् ब्रह्म एव। मह्यं तु भर्तृहरिमतं रोचते। यतः शब्दात एव सृष्टि, शब्दे एव स्थितिः, शब्दे एव लयः, शब्दं विना जीवितुं दुःसहमीव इति सर्वैः सर्वदा अनुभूयते। शब्दं विना प्राणीनां कालः क्षणमपि न गच्छति। अतः परावाक् शब्दब्रह्म एव इति सिद्धान्तः समीचीनः इति दिक्।

***सहायकग्रन्थसूची –***


१. "वाक्यपदीयम्"– भर्तृहरिः, रामलालकपूरन्यास, सोनिपत, १९९६ ।

२. "वाक्यपदीयम्"– भर्तृहरिः, अम्बाकर्त्रीसहितम्, सरस्वतीभवनग्रन्थमाला, वाराणसी, १९६८।

३. "लघुशब्देन्दुशेखरः"– नागेशभट्टः, चौखाम्बासंस्कृतप्रतिष्ठानम्, दिल्ली, १९९८।

४. "परमलघुमञ्जुषा"– नागेशभट्टः, चौखाम्बासंस्कृतप्रतिष्ठानम्, दिल्ली, १९९०।

५. "वाक्यपदीयम्"– भर्तृहरिः, अनुवादकः – प्रो. डॉ. किशोरचन्द्रपाढ़ी (ARS, SISV, Puri, २००६) ।

६. "वैयाकरणसिद्धान्तकौमुदी"– बालमनोरमातत्त्वबोधिनीटीका, मोतीलाल बनारसीदास, दिल्ली, २००५ ।

७. "वर्णविमर्शः"– श्रीकृष्णशर्मा, जगदीशसंस्कृतग्रन्थमाला, जयपुर, १९८९ ।

८. "पाणिनीय शिक्षा"– पाणिनि, चौखाम्बासुरभारती प्रकाशन, वाराणसी, १९९१ ।

# विद्यालयस्तरीय अध्यापकानां प्रशिक्षणस्य उद्देश्यानि आवश्यकता च

## (Need and importance of teachers training at school)

Priyavas Mishra
M.Ed (2nd year)

**भूमिका(Introduction) –**

सम्पूर्णशिक्षाव्यवस्थायाः केन्द्रबिन्दु अध्यापकः भवति। शैक्षणिककार्यक्रमे अध्यापकानां महत्त्वपूर्णा भूमिका वर्तते। एकः अध्यापकः ज्ञानवान् भवति। अपरस्य अध्यापकस्य कृते अस्य ज्ञानप्रदानार्थं क्षमता भवति। परन्तु यस्य अध्यापकस्य ज्ञानम् एवं प्रशिक्षणस्य दक्षता उभयम् अस्ति सः उत्तमः प्रशिक्षकः वा अध्यापकः भविष्यति। प्रशिक्षणस्य अर्थः भवति प्रशिक्षितुं किमपि कार्ये अभ्यासमाध्यमेन दक्षताप्रदानं भवति ।

साधारणतः, प्रशिक्षणं किमपि कार्यविशेषं सम्पादयितुं कर्मचारीणां ज्ञाने निपुणता वृद्धिःएव कार्य भवति। प्रशिक्षणम् एका अल्पकालिका शैक्षणिकी प्रक्रिया भवति, यत्र एकः व्यवस्थितः एवं संगठितकार्य-प्रणाल्याः उपयोगं करोति, येन एकः कर्मचारी किमपि निश्चितम् उद्देश्यं पूरयितुं प्रविधिः ज्ञाने निपुणतार्थं शिक्ष्यते। अपरशब्देन प्रशिक्षणं कार्यसंगठनस्य आवश्यकतायां एकस्य व्यक्तेः ज्ञानं , निपुणता, व्यवहारः, अभिरुचिः तथाच मनोवृत्तियादिनां परिष्कारं करोति। एवं प्रकारेण प्रशिक्षणम् एकस्य अध्यापकस्य तथा विद्यालये कार्यरतानाम् अध्यापकानामनुभवः भवति। यस्यान्तर्गते द्वयोः अध्यापकयोः तुलनात्मकरूपेण स्थायी परिवर्तने प्रयासः क्रियते, यः स्वस्य कार्यनिष्पादनक्षमतायां परिमार्जनम् आनयति।

**प्रशिक्षणस्य अर्थः (Meaning of Training) –**

प्रशिक्षणम् आंग्लभाषायां 'Training' इति कथ्यते। यस्यार्थः भवति नियमितरूपेण प्रदीयमाना व्यवहारिकशिक्षा। शिक्षणम् एकं परिणामरूपं ज्ञानं, कौशलं, दक्षतावर्धनम् इत्यादीनि अर्थाः भवन्ति। स्वयं वा अपरः कस्याः अपि व्यक्तेः कृते शिक्षाप्रदानं यः कौशलविकासं करोति येन किमपि विशेषकार्ये पूर्णता आयाति।

**प्रशिक्षणस्य परिभाषा (Definition of Training)**

प्रशिक्षणविषये केचन विद्वांसः परिभाषाः प्रदत्तवन्तः। ते निम्नरूपेण सन्ति –





१. डेल एस. बीच महोदयानुसारेण –

प्रशिक्षणम् एका संगठिता प्रक्रिया भवति, येन मानवः किमपि निश्चतम् उद्देश्यं पूरयितुं ज्ञानम् अथवा निपुणतां शिक्ष्यते।

**प्रशिक्षणस्य विशेषता (Characteristics of Training) –**

१. प्रशिक्षणं मानवसंसाधनविकासे एका महत्त्वपूर्णा प्रणाली तथा मानवसंसाधनप्रबन्धे आधारभूतसंचलनात्मिका भविष्यति।

२. प्रशिक्षणं विद्यालयीय अध्यापकानां विकासे एका व्यवस्थिता एवं पूर्वनियोजिता प्रक्रिया भवति।

३. प्रशिक्षणम् एका सतत् प्रचलिता प्रक्रिया।

४. प्रशिक्षणं शिक्षणे अनुभवप्राप्तये प्रक्रिया भवति।

५. प्रशिक्षणं किमपि कार्ये व्यवहारिकं शिक्षास्वरूपं भवति।

६. प्रशिक्षणम् अध्यापकानां कार्यक्षमतायां वृद्धिं करोति।

७. प्रशिक्षणं मानवीयसंसाधनानां उद्देश्यपूर्णं विनियोगः भवति, व्यक्तीनां संगठनात्मक लक्षपूर्तये सहायकः भवति ।

८. प्रशिक्षणेन अध्यापकानां ज्ञानस्य एवं निपुणताया वृद्धिः जायते।

**प्रशिक्षणं शिक्षा च (Teaching and Education) –**

प्रशिक्षणं शिक्षातः भिन्नं भवति, तथा द्वयोर्मध्ये भेदः निम्नप्रकारः –

१. प्रशिक्षणम् एका प्रक्रिया भवति। यया किमपि कार्यविशेषः सम्पन्नकरणार्थं ज्ञानस्य निपुणतायाः च वृद्धिं करोति। परन्तु शिक्षा एका प्रक्रिया भवति, यया कस्याः अपि व्यक्तेः सामान्यज्ञानं तथा बोधशक्तिं वर्धयति।

२. प्रशिक्षणस्य क्षेत्रम् एकं कार्यविशेषं पर्यन्तं सीमितं, यदा शिक्षाक्षेत्रम् अपेक्षाकृतं व्यापकं भवति यत विविध घटनानां सम्बन्धे सामान्यज्ञानप्रदानं करोति।

३. प्रशिक्षणं प्रविधिसम्बन्धितं, परन्तु शिक्षा प्रविधेःसैद्धान्तिकश्च द्वयोः प्रकारयोः ज्ञानेन सह सम्बन्धितं भवति।

**प्रशिक्षणं विकासश्च (Training and Development) –**

प्रशिक्षणम् विकासश्चपरस्परं परिपूरकौ भवतः।१. प्रशिक्षणम् अध्यापकानाम् कार्यसम्बन्धी क्रियाविधेःसहायता प्रदानं करोति । यस्य विकासः, प्रबन्धः, प्रशासनम् तथा संगठनादी सिद्धान्तक्षेत्रे विकासं कर्तुं कारणीभूतं भवति।

**अध्यापकप्रशिक्षणस्य उद्देश्यानि (Aims of Teacher Training) –**

किमपि प्रशिक्षणकार्यक्रमस्य सफलता निर्भरं करोति तस्योद्देश्यं केन रूपेण कुशलतां निर्धारय... सामान्यसंगठनमाध्यमेन स्वस्य अध्यापकानां प्रशिक्षणार्थम् उद्देश्यानिअधोलिखितानि भवन्ति –

१. अध्यापकानां तथा शैक्षिकप्रबन्धनस्य परिवर्तित आवश्यकतायाः पूरणार्थ प्राचीनानां त... नवीनाम् अध्यापकानां प्रशिक्षणप्रदानम्।

२. कस्मिन् अपि निश्चितलक्ष्ये कुशलतानिष्पादनार्थ नियुक्त विद्यालयीय अध्यापक... आवश्यकाधारभूतज्ञानं निपुणतां च प्रददाति।

३. प्रशासनस्तरे योग्य एवं कुशलः अध्यापकानां व्यवस्था निर्माणं करोति प्रशिक्षणम्।

४. प्रशिक्षणम् अध्यापकानां कार्यदशा एवं संगठनात्मक संस्कृतिः अनुकूलनिर्माणं करोति।

**अध्यापकप्रशिक्षणस्य आवश्यकता (Need of Teacher Training) –**

१. विद्यालयीय शैक्षणिकसंस्थाने सैद्धान्तिकज्ञानम् आवश्यकम्। परन्तु विविधक... सफलतानिष्पादनार्थं व्यवहारिकज्ञाने निपुणतायाः आवश्यकता भवति। यत् प्रशिक्षणेन पूर्णं भवति।

२. नव-नियुक्तानाम् अध्यापकानां प्रशिक्षणप्रदानस्य आवश्यकता भवति।

३. प्राचीननवीनाम् अध्यापकानां प्रभावपूर्णव्यक्तित्वं निर्मातुं प्रशिक्षणस्य आवश्यकता वर्त...

**निष्कर्षः (Conclusion) –**

अतः निष्कर्षरूपेण वक्तुं शक्यते यत् प्रशिक्षणम् उत्तमकार्यस्य प्रभावपूर्णरूपेण सम्पादन... विद्यालयीय अध्यापकानां ज्ञानप्रदानप्रक्रिया भवति। यत्र अध्यापकाः स्वस्य कार्यं अवगम्य कार्यक्षम... तथा कौशलम् अर्जयन्ति।

***सन्दर्भग्रन्थाः –***


१. डॉ. गुप्ता मंजु, भारतीय तथा वैश्विक परिप्रक्ष्ये अध्यापकशिक्षा

२. अन्तर्जालम् –www. Google. Com

३. डॉ. शरतेन्दु दुबे सत्यनारायण, अध्यापक शिक्षा, शारदा पुस्तक भवन्, इलादाबाद।

४. Mishra Lokanath, Teacher Education,

५. Review of Educational Research www. Area. Net. Retrieved 2018-08-1...






# वैज्ञानिकभाषारूपेण संस्कृतशिक्षणस्य महत्त्वम्

**विभूतिभूषणप्रधानः**

शिक्षाचार्यः (द्वितीयवर्षम्)

संस्कृतसाहित्ये भौतिकविज्ञानस्य, रसायनशास्त्रस्य, गणितस्य, विमानशास्त्रस्य, ज्योतिषशास्त्रस्य, वास्तुविद्यायाः च ग्रन्थाः समुपलभ्यन्ते । भौतिकविज्ञानस्य प्रवर्तकः ऋषिवरः कणादः (ई. पू.५००) आसीत्। सः अनुसिद्धान्तविषये उक्तवान् प्रत्येकस्य पदार्थस्य क्षुद्रतया कणिका अस्ति या अदृश्या अविभाज्या च अस्ति । क्वाण्टम् सिद्धान्तम् अधिकृत्य उपनिषदि अपि चर्चा दृश्यते। यथा –

**अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् ।**
**तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः ।।**

(कठोपनिषद् – २/२/२०)

रसायनशास्त्रवित् नागार्जुनः (ई. पू. २००) 'रसरत्नाकरः' इत्यस्मिन् ग्रन्थे लोहालयनिर्माणार्थं साङ्केतिकव्यवस्थां , गन्धकस्य शोधनविधेः च वर्णनं कृतवान्। 'रससंहिता''मानसोल्लास' प्रभृतिग्रन्थाः रसशास्त्रस्य निदर्शनम्। गणितक्षेत्रे भारतीया वेदगणितपद्धतिः आधुनिकगणकयन्त्रम् (Calculator) अपि अतिशेते।

भरद्वाजमहर्षेः यन्त्रसर्वस्वम् अगस्त्यस्य शक्तिसूत्रम्। शाकटायन्स्यवायुतत्त्वप्रकरणं विमानशास्त्रस्य परिचयं ददाति। रामचन्द्रस्य पुष्पकविमानस्य वर्णनमपि रामायणे प्राप्यते। मङ्गलग्रहस्य विषये चपलः "सरक्तगौरः मज्जासारश्चमाहेय" सूर्यस्य विषये "सूर्यादीनां सञ्चारः भ्रममूलः" ग्रहाणाम् अंशाः विषये "ग्रहाणां स्वप्रकाशता नास्ति" इत्यादयः बहवः विज्ञानसम्मताः अंशाः भारतीयज्योतिषशास्त्रे विद्यते। आयुर्वेदशास्त्रे विभिन्नौषधीनां वर्णनं लभ्यते। कौटिल्यस्य अर्थशास्त्रं राजनित्याः प्रमुखः ग्रन्थः अस्ति। संगणकयन्त्रं गतिशीलोपकरणम् अस्ति येन केषुचित् निमेषेषु गणितीयप्रक्रियां कर्तुं शक्यते। अतएव संगणकयन्त्रं नियमानुसरणकर्त्ता कथ्यते। संस्कृतग्रन्थेन सह एतस्य सम्बन्धं लक्ष्यीकृत्य अमेरीकीयः वैज्ञानिकः 'रिकब्रिग्स' नासा स्थले समुद्घोषितवान् यत् –

"संस्कृतभाषा खलु विश्वभाषासु कम्प्यूटरविधेः कृते सर्वाधिकमुपयुक्तानुकूला" इति। अ
वैज्ञानिकभाषारूपेण संस्कृतशिक्षणस्य महत्त्वं स्वीकार्यम्।

संस्कृतभाषा वैज्ञानिकभाषा भवति। संस्कृतस्य व्याकरणं मनोवैज्ञानिकं विश्वप्रसिद्धं च। मस्तिष्क
कृते बहूपयोगी अनुकूला वर्त्तते। संस्कृतभाषायां सर्वाणि शास्त्राणि सन्ति। अस्माकं जीवने जन्मतः मृ
यावत् षोडशसंस्काराः संस्कृतभाषामेव सम्पन्नाः भवन्ति । आदर्शव्यक्तित्वनिर्माणार्थं चरित्रं, आत्मानुशासन
अनुभूतिज्ञानम्, भारतीय भाषासंरक्षणार्थं, परोपकारार्थं, संस्कृतिसंरक्षणार्थं च संस्कृतशिक्षणस्यावश्यक
आधुनिके भारते अस्ति।



# शाकुन्तले पर्यावरणसंरक्षणम्

**प्रियदर्शनीबनजागृ**
शिक्षाचार्यः (प्रथमवर्षम्)

परितः आवृणोति आच्छादयति यत् तत् पर्यावरणम्, पर्यावृत्तिः पर्यावरणम्, अनया व्युत्पत्त्या
पर्यावरणशब्दो निष्पद्यते। ये मानवान् परितः आच्छादयन्ति। मानवजीवनं च प्रभावयन्ति ते पर्यावरणशब्देन
गृह्यन्ते। मनुष्यः यत्र निवसति–क्रीडति –खादति–वस्त्राणि आभूषयति, पिबति वायोश्च सेवनं करोति
एतानि सर्वाणि पर्यावरणे सन्निहितानि भवन्ति। पर्यावरणम् एतत् अस्मात् प्रकृत्या प्रदत्तं वर्त्तते। यत्
अस्माकं सर्वेषां प्राणतत्त्वस्य रक्षां करोति। सम्प्रति आधुनिककाले पर्यावरणस्य संरक्षणविषयम् अतीव
महत्त्वपूर्णं वर्त्तते। यदि पर्यावरणं नष्टं भवति तर्हि समग्रं विश्वं नष्टमेव भविष्यति इति निस्सन्देहेन वक्तुं
शक्यते। संस्कृतनाटके षुबहुत्र पर्यावरणविषये अनेके विषयाः चर्चिताः सन्ति। कविकालिदासस्य
अभिज्ञानशकुन्तलानाटके शकुन्तला पर्यावरणं संरक्षणस्योपरि विशेषध्यानं दत्तवती। यदि विचार्यते
तस्मिन् नाटके प्रथमाङ्केऽपि मुनयः वनसंरक्षणं कृत्वा यज्ञं कृत्वा पशूनां संरक्षणं विधाय पर्यावरणसंरक्षणं
कृतवन्तः। शकुन्तलायाः पालनं तपोवनेऽभवत्। फलमास्ते यत् सा तपोवनस्य वृक्षान् लतान्, हरिणान्
पक्षीणाञ्च स्वबान्धवरूपेण मनुते। प्रकृतेः उपादानैः सह तस्या अभेदसम्बन्धो वर्त्तते। अत एव सा
मनसा स्नेहेन सखीभ्यां साकं वृक्षाणामुपरि जलसिंचनं करोति। स्नेहातिरेकादेव हेतोः शकुन्तलायाः





नवमल्लिकाया नाम वनतोषिणिनवमल्लिका इति। शकुन्तला माधविलतायाः सेचनं तु तदा विस्मरिष्यति
या सा आत्मना मपि नहि संस्मरेत्।

अतः सः माधविलतायां स्वभगिनीं मनुते। यद्यपि शकुन्तला आभूषणप्रिया तथापि वृक्षाणां
लतानां वा पत्राणि वा पुष्पाणि वा नैव चिनोति स्म। यावत्पर्यन्तं लतासु जलं न सिञ्चति तावत् पर्यन्तं
स्वयं जलं न पिबति स्म। समाजे यदा अस्माकं पुत्रः ,पुत्री जन्म लभ्यते, विवाहे वा तदा अस्माकम्
उत्सवः भवति स्म तेनैव शकुन्तलायाः प्रकृतिं प्रति प्रेम, स्नेहश्च अस्तीति विज्ञापते। आधुनिकनारी
समाजस्यापि प्रकृतिं प्रति स च स्नेहः भवेत्, तेन पर्यावरणस्य क्वचित् संरक्षणं विधातुं शक्यते।
शाकुन्तले पर्यावरणस्य संरक्षणाय इयमेव विशिष्टा कापि शिक्षा लभ्यते– उक्तं हि –

**"पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।**

**आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्।।"**

प्रकृतिप्रिया शकुन्तला यदा स्वपतिगृहस्य प्रस्थानं करोति तदा कृतपुत्रः मृगपोतकः तस्याः
प्रस्थानमवरुणद्धि तथा च महर्षिः कण्व उक्तवान् –

**"यस्य त्वया व्रणविरोपणमिङ्गुदीनां ,
तैलन्यषिञ्चत मुखे कुशसूचिविद्धे।
श्यामाकमुष्टिपरिवर्द्धितको जहाति,
सोऽयं नः पुत्र कुतकः पदवी मृगस्ते।।"**

शकुन्तलायाः विरहपर्युत्सुका तपोवनस्य पादपाः पशवःपक्षिण च विषण्णा भवन्ति। तथा चाह
प्रियंवदा शकुन्तला।

**"उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तनामयूरी।
अपसृतपाण्डुपत्राणि मुञ्चन्त्यश्रूणीव लताः"।।
एवञ्च पद्यमाध्यमेन शाकुन्तले पर्यावरणसंरक्षणाय विशेषदृष्टिः आसीदिति ज्ञायते।**



# शिक्षायाः स्वरूपम्

दीपिका गिरि
शिक्षाचार्यः (प्रथमवर्षम्)

मनुष्यः भगवतः सर्वश्रेष्ठः कृतिरस्ति। समग्रे प्राणिसंसारे मानवमहत्ता शिक्षयैव वर्तते। भूतले अनेके प्राणिनः निवसन्ति, परं ते समेऽपि शिक्षाविहीना एव। शिक्षां विना मनुष्यः पशुवत् भवति। शिक्षा एव विद्यारूपेण गृहीता। शिक्षा एका निरन्तरप्रचल्यमाना प्रक्रिया वर्तते। मनुष्यः जन्मनः आरभ्य मृत्युपर्यन्तं सद्गुणानां सञ्चारः अन्तःकरणे करोति।

शिक्ष् विद्योपादाने धातुना गुरोश्च हलः इति पाणिनीयसूत्रेण 'अ' प्रत्यये सति शिक्षा शब्दः निष्पद्यते। शिक्षायाः आंग्लभाषायां पदं भवति Education इति। Education इति शब्दः लेटिन् भाषायाः Educatum, Educare, तथा Educere इति पदत्रयस्याधारेणोत्पन्नः इति विदुषां मतम्।

**शिक्षायाः परिभाषा –**

१. न हि ज्ञानेन सदृशं पवित्रमिह विद्यते। (श्रीमद्भगवद्गीता)

२. स्वस्थे शरीरे स्वस्थं मनः नाम शिक्षा। (अरस्तू)

स्वस्य सर्वाङ्गीणविकासाय प्राप्यमाणां शिक्षां मनुष्यः परिवारात् समाजात्, मित्रेभ्यः प्रकृत्याः विद्यालयाश्च प्राप्नोति। मनुष्यः प्रतिक्षणं किमपि न किमपि अवश्यं शिक्षते, परन्तु सा शिक्षा अपि त्रिविधा दीयते –

**❖ औपचारिकशिक्षा**

यत्र निर्धारितस्थाने निर्धारितसमये निर्धारितेभ्यः छात्रेभ्यः निर्धारितैः अध्यापकैः निश्चितपाठ्यक्रमानुसारं निश्चितविषयस्य शिक्षां प्रदीयते तन्नाम औपचारिकशिक्षा।

**❖ अनौपचारिकशिक्षा**

अनिश्चतस्थाने अनिश्चतसमये अनिश्चितेभ्यः छात्रेभ्यः अनिश्चितैः अध्यापकैः अनिश्चतपाठ्यक्रमानुसारम् अनिश्चितविषयस्य शिक्षां प्रदीयते तन्नाम अनौपचारिकशिक्षा।

**❖ निरौपचारिकशिक्षा**

यत्र छात्राः स्वयं पठित्वा दृष्ट्वा वा स्वत एव शिक्षां प्राप्नुवन्ति तन्नाम निरौपचारिकशिक्षा इति।





**शिक्षायाः प्रक्रिया**

शिक्षाप्रक्रियायाः विषयं चर्चयामस्तर्हि दृष्टिपथमायाति यत् बहूनां शिक्षाशास्त्रिणां वहुविधमतानि सन्ति। यथा –

१. एडम्समहोदयः शिक्षां द्विमुखीप्रक्रियारूपेण मन्यते। एषः गुरुं शिष्यं च प्रमुखत्वेनाङ्गीकरोति।

२. जाँनडिवीमहोदयः शिक्षां त्रिमुखीप्रक्रियारूपेण स्वीकरोति। एषः छात्रं शिक्षकं पाठ्यक्रमश्चाङ्गीकरोति।

शिक्षायाः बहूनि कार्याणि सन्ति। तत्र मानवजीवनपरिप्रेक्ष्ये शिक्षायाः कार्याणि पश्यामश्चेदायान्ति केचन प्रमुखाः बिन्दवाः। ते यथा –

१. सुनागरिकनिर्माणम्।
२. व्यक्तित्वविकासः।
३. सच्चरित्रनिर्माणम्।
४. मूलप्रवृत्तीनां नियन्त्रणम्।
५. आवश्यकतायाः पूर्तिः।
६. व्यावहारिकज्ञानप्राप्तिः।
७. जीवनार्थं सन्नद्धीकरणम्।

प्राचीनकाले एषा शिक्षा गुरुकुलेषु दीयते स्म। तत्र बटवः गुरुकुले एव स्थित्वा गुरुणां सेवां कुर्वन्तः स्वावलम्बी भूत्वा सर्वाणि आवश्यकानि कार्याणि कुर्वन्तः शिक्षां प्राप्नुवन्ति स्म। ते भिक्षाटनं कृत्वा भोजनं कुर्वन्ति स्म। ते यावत् शिक्षासमाप्तिर्न भवति स्म, तावत् गृहं न यान्ति स्म। शिक्षायाः आरम्भे तेषां यज्ञोपवितसंस्कारः, वेदारम्भसंस्कारश्च भवति स्म। पुनः शिक्षायाः समाप्यनन्तरं तेषां समावर्त्तनसंस्कारः कृत्वा तेभ्यः गृहस्थाश्रमं प्रति गन्तुमधिकाराः दीयन्ते स्म। तस्मिन् काले शास्त्रैस्साकं शस्त्राणामपि शिक्षा दीयते स्म। ते नैतिकमूल्यानां सामाजिकमूल्यानां राष्ट्रियमूल्यानां चापि शिक्षा प्रदीयते स्म। तदा आसीत् –

**यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।**

**राष्ट्रदा राष्ट्रं मे देहि।।**

यां शिक्षां प्राप्य मनुष्यः स्वोन्नत्यैः साकं समाजस्य राष्ट्रस्य वा उन्नतिमपि कर्तुं सन्नद्धो भवति स्म। परन्तु अस्मिन् काले मानवः लार्डमेकाले पद्धत्या शिक्षां प्राप्य केवलं साक्षरः तु जातः परं मूल्यानाम् अभावः दरीदृश्यते। अतः अस्माभिः सा शिक्षा प्राचीनशिक्षा गुरुकुलपद्धतिर्वा आश्रयणीया। तदैवास्माकं समाजस्य राष्ट्रस्य वा उन्नतिर्भवितुमर्हति।

# संस्कृतशिक्षणे दृश्यश्रव्यसाधनानि

चतुर्भुजजाना
शिक्षाचार्यः (द्वितीयवर्षम्)

एकविंशतिशताब्द्यां प्रविशद्भिरस्माभिः सूचनायाः सञ्चारस्य च क्षेत्रे अद्वितीयाः उपलब्धयः प्राप्ताः । अद्य अधिकाधिकसूचनाः कस्यापि राष्ट्रस्य विकासस्य मेरुदण्डं सञ्जाताः । उपग्रहाः अन्यग्रहाः इव केवलम् आकाशे विचरणमेव न कुर्वन्ति,अपितु सूचनानाम् आदानप्रदानयोः अपि सहायकाः । अनेन सहैव वयं 'कर्गदरहितसमाजम्' प्रति गच्छामः । एतादृशस्थितौ अस्माभिः संस्कृतशिक्षणपरम्परासु परिवर्तनं कर्त्तव्यं तथा नवीनतमदृश्यश्रव्य-साधनानाम् अधिकाधिकोपयोगं कृत्वा शिक्षणं रुचिकरम्, आकर्षकं , सुग्राह्यञ्च कर्तव्यम् । अनेकैः शोधाध्ययनैः इदं सिद्धं यत्किमपि कार्यम् अधिगन्तुं व्यक्तेः यावन्ति ज्ञानेन्दियाणि सक्रियाणि भवन्ति तावान् एव अधिगमः अधिकः स्थायी भवति ।

निम्नोक्तकारणैः दृश्यश्रव्यसाधनानि महत्त्वं भजन्ते–

१. अनुभवस्य सीमा विस्तृता स्यात् ।

२. शिक्षणं प्रभावपूर्णं स्यात् ।

३. अधीतं स्थिरं स्यात् ।

४. लब्धं ज्ञानं परिपुष्टं स्यात् ।

५. पाठ्यविषयः रोचकः , आकर्षणीयश्च स्यात् ।

६. पाठ्यवस्तु सार्थकं, सुग्राह्यञ्च कर्तव्यम् ।

७. भाषायाः व्यावहारिकप्रयोगदर्शनेन छात्राः अनुकरणे तत्पराः स्युः ।

'यूनिसेफ' इत्यस्याध्ययनाधारेण –

| **वयं कथं जानीमः ?** | **वयं कथं स्मरामः ?** |
|---|---|
| आस्वाद्य- १ % | पठित्वा- १० % |
| स्पृष्ट्वा- २ % | श्रुत्वा- २० % |
| घ्रात्वा- ३ % | दृष्ट्वा- ३० % |
| श्रुत्वा- ११ % | दृष्ट्वा श्रुत्वा च- ५० % |
| दृष्ट्वा - ८३ % | कथयित्वा- ३० % |
| | कथयित्वा श्रुत्वा च-९० % |





दृश्यश्रव्यसाधनानि शिक्षणस्य एका एतादृशी सहायिका सामग्रीभिः स्थौल्यात् सूक्ष्मतां प्रति गच्छतां छात्राणां ज्ञानं पोपयितुं बलं प्राप्यते । कस्याः अपि भापायाः शुद्धस्य परिष्कृतस्य परिमार्जितस्य ज्ञानस्य हेतोः अभ्यासकरणमावश्यकं , यतो हि संस्कृतभापा व्यवहारिकी भापा नास्ति , अतो हेतोः जनाः प्रायः इमां शुष्कनीरसेत्यादिभिः विशेपणैः सम्बोधयन्ति , किन्तु एतेषां विशेपणानां प्रयोक्तारः संस्कृतभाषायाः महत्तां सरलतां च न जानन्ति । श्लोकानां यन्माधुर्यं संस्कृतभाषायां विद्यमानं तत्कस्यामपि अन्यभाषायां नास्ति । माध्यमिकस्तरपर्यन्तं छात्रः तिसृभिः भापाभिः सह अन्यविपयाणाम् अपि भारं वहति , अतः आवश्यकता अस्ति यत् संस्कृतशिक्षणं रुचिकरं भवेत् ।

उपर्युक्तकारणैः कस्यापि विपयस्य शिक्षणे दृश्यश्रव्यसाधनानां महत्त्वं स्पष्टीभवति । अतः संस्कृतशिक्षणेऽपि दृश्यश्रव्यसाधनानां प्रयोगः कर्तव्यः । एतेषां साधनानां प्रयोगे संस्कृतशिक्षणं रोचकं भवति । छात्राः संस्कृतं प्रति अत्यधिकमाकृष्टाः भवन्ति ।

**दृश्यश्रव्य-साधनानां प्रकाराः-**

१ . **दृश्यसाधनानि**- वर्णानां , पदार्थानाञ्च स्वरूपं प्रदर्शयितुम् उपयुज्यमानानि साधनानि दृश्यसाधनानि भवन्ति ।

२ . **श्रव्यसाधनानि** – विभिन्नान् ध्वनीन् , शब्दान् च श्रोतुमुपयुक्तानि साधनानि श्रव्यसाधनानि भवन्ति ।

३ . **दृश्यश्रव्यसाधनानि** – द्रष्टुं , श्रोतुञ्च उपयुक्तानि साधनानि दृश्यश्रव्य- साधनानि भवन्ति ।

दृश्यश्रव्यसाधनानि

| दृश्यसाधनानि | श्रव्यसाधनानि | दृश्यश्रव्यसाधनानि |
|---|---|---|
| १. श्यामपट्टः | १. आकाशवाणी | १. दूरदर्शनम् |
| २. चित्राणि | २. वर्तुलाकारध्वनिग्राहक-यन्त्रम्(ग्रमोफोन) | २. श्रव्यदृश्याभिलेखः |
| ३. मानचित्राणि | ३. ध्वन्याभिलेखः | ३. अभिनयः |
| ४. रेखाचित्राणि | ४. भाषापञ्जिका | ४. चलचित्रम् |
| ५. पत्रकम् | ५. भाषाप्रयोगशाला | ५. भाषाप्रयोगशाला |
| ६. प्रतिकृति | ६. दूरस्थशिक्षणम् | |
| ७. भित्तिपत्रिका | | |
| ८. पत्रपत्रिका | | |
| ९. पाठ्यपुस्तकम् | | |
| १०. चित्रविस्तारकयन्त्रम् | | |
| ११. प्रक्षेपणयन्त्रम् | | |

शिक्षाप्रक्रियायां दृश्यश्रव्यसाधनानि पाठ्यमानविषये सौकर्यं कल्पयितुम् अत्यन्तं सहायकानि भवन्ति। शैक्षिकोद्देश्यानि एतेषां साधनानां द्वारैव सम्पादयितुं शक्यन्ते। शिक्षकः यान् विषयान् स्वयम् अवबोधयितुं नार्हति, उपकरणैः तान् विषयान् सः सुष्टतयाबोधयितुमर्हति। यदि संस्कृतशिक्षकः शिक्षणसाधनानां गुणान्, दोषान्, उद्देशान्, शैक्षिकोपयोगिताश्च मनसि निधाय प्रयुञ्जीत, तर्हि संस्कृतशिक्षणम् आकर्षकं रुचिं सत् छात्रेषु सक्रियतां, विषये स्पष्टतां च कल्पयितुमर्हति इत्यत्र नास्ति सन्देहस्य अवसरः।

*सन्दर्भग्रन्थाः*

१. शर्मा सुदेश कुमार (२००८), शैक्षिकप्रविधिशास्त्रम्।

२. मिश्रः रमाकान्त (२०१४), शैक्षिकप्रविधिः।

३. मित्तलः सन्तोष (२०१३), संस्कृतशिक्षणम्।





# समाजं प्रति संस्कृतस्यावश्यकता

**विष्णुप्रिया जेना**

शिक्षाचार्यः (प्रथमवर्षम्)

**संस्कृतभाषायाः महत्त्वम्**

संस्कृतभाषा भारतवर्षस्य एका प्राचीनतमा भाषा । इयं भाषा अतीव पवित्रा। अस्माकं सकलज्ञानमय सर्वप्राचीनः ग्रन्थः वेदः संस्कृतभाषया एव रचितः। राष्ट्रियस्तरे संस्कृतस्य उपकारिता वहुलतया दृश्यते। संस्कृतभाषायां कृषि-शिल्प-वाणिज्य-निर्माण-चिकित्सादिषु आध्यात्मिकविषयेषु वर्णनां भवति। संस्कृतभाषाध्ययनेन एषु विषयेषु ज्ञानं भवत्येव देवपूजा, पितृपूजा, अतिथिपूजादि क्षेत्रे इयं भाषा सम्यक् ज्ञानं ददाति। यतः अस्ति – पितृदेवो भव, मातृदेवो भव, अतिथिदेवो भव, आचार्यदेवो भव इत्यादयः। भारतीयसंस्कृतिः संस्कृतभाषायाः उद्भवः भवति।

**संस्कृतस्यावश्यकता –**

समाजस्य सामाजिकावस्था सुशृङ्खलिता भवति संस्कृतभाषाया एव। संस्कृतभाषा समाजस्य लोकप्रकृतिं शृङ्खलितं करोति। अतः अस्याः भाषायाः अपरं नाम लोकभाषारूपेण परिचीयते। लोकानां चरित्रनिर्माणं, कृषिकार्यं, शिल्पनिर्माणं, भाग्यनिर्माणं, शास्त्रज्ञानं, भगवद्ज्ञानं, यज्ञविधानं, मुक्तिप्रदानं, आदिविषयेषु इयं भाषा सम्यक्ज्ञानं ददाति। चरित्रगठनाय संशोधनाय च इयं भाषा सहायिका रूपेण विराजते। गुरु रूपेण अस्मभ्यं सुमार्गे गन्तुं शिक्षां ददाति। किं कुर्यात् किं न कुर्यात् इत्यस्मिन् विषये अङ्गुलिनिर्देशं कृत्वा सुमार्गे नयति। यथा महर्षिणा चाणक्येन वर्णितम् –

**परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्**
**वर्जयेत्तादृशं बन्धुं विषकुम्भं पयोमुखम्।।**

अर्थात् प्रत्यक्षे मिष्टभाषिणं परोक्षे कार्यनाशिनं बन्धुं तत्क्षणात् वर्जनं कुर्यात्। नोचेत् विषमिव फलं दास्यति इति न सन्देहः। अस्मात् श्लोकात् संस्कृतभाषा अस्मभ्यं उत्तममार्गे गन्तुं शिक्षां ददाति। इत्थं कुरु इत्थं मा कुरु इति बहुषु विषयेषु संस्कृतभाषा अस्माकं जीवनगतिं परिचालयति।

युगस्य प्रारम्भसमये भगवान् परंब्रह्म पवित्रात्मऋषिगणेभ्यः संस्कृतभाषामाध्यमेन सकलज्ञानमयं वेदं प्रदानं अकरोत्। अयं वेदः जनानां परमोपकारि शास्त्ररूपेण सर्वत्र अर्च्यनीयः भवति। परमशास्त्रात् वेदात् सर्वेषु विषयेषु ज्ञानं मिलति। भारतवर्षस्य संस्कृतिः संस्कृतभाषायां एव विद्यते। चरित्रं संस्कारं

करोति इयं भाषा। अतः समाजे जनाः शृङ्खलितरूपेण जीवननिर्वाहं कुर्वन्ति। चाणक्यः, भर्तृहरिः, मनुः, पाणिनी, कालिदाश्यादयः, महात्मनः संस्कृतभाषयानीतिवाणी तथा व्याकरणसाहित्यक्षेत्रे सुष्ठरचनां कृत्वा समाजस्य हितसाधनं कृतवन्तः। यस्मात् कारणात् संस्कृतभाषा लोकमुखे अद्यावधि पूजिता भवति। महर्षिणां रचना द्वारैव जनाः उत्तमशिक्षां लब्धवन्तः। संस्कृतभाषया व्यासदेवेन कृता भगवद्गीता समाजस्य जनानां नित्यनैमितिक जीवनचलनीक्षेत्रे आलोकवर्तिकारूपेण आलोकप्रदानं कृत्वा पथप्रदर्शिका भवति। गीताशास्त्रम् आलोकर्वतिका रूपेण शिक्षां ददाति यथा –

**श्रद्धावाँल्लभतेज्ञानं तत्परः संयतेन्द्रियः।**

**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति।।** श्रीमद्भगवद्गीता.४.३९।।

अर्थात् छात्रः अथवा जनः श्रद्धावान् भूत्वा ज्ञानं ग्रहीतुं सक्षमः भवति। तदन्तरं शान्ति प्राप्नोति। इयं शिक्षां संस्कृतभाषायाः एव लभ्यते।

संस्कृतभाषा राष्ट्रियस्तरे विविधसम्प्रदायमध्ये एकत्री करोति। सत्यं, शान्तिः, मैत्री चेति त्रिविधसूत्रं संस्कृतभाषायां मिलति। अस्माकं राष्ट्रियपताकायामस्ति – सत्यमेव जयते। संस्कृतभाषा अस्माकं जीवनधारां शृङ्खलितरूपेण नयति।

एतेन भारतवर्षस्य जातिः सुरक्षितः भवितुमर्हति, अस्मात् कारणात् संस्कृतम् एव भारतवर्षस्य राष्ट्रियसम्पत्तिरूपेण सुशोभितं भवति। अतः संस्कृतभाषा समाजस्य बहु कल्याणकारी भाषारूपेण सुशोभते। समाजं प्रति संस्कृतस्य अवदानं बहुलतया परिलक्षते। अतः कविना वर्ण्यते –

**संस्कृते पदलालित्यं संस्कृते चार्थगौरवम्**

**संस्कृते सकला कला संस्कृते किं न विद्यते।**

**अस्मात् संस्कृतभाषा चिरनमस्या इति।**





# सागर

साक्षी वन देख रहा है सूरज
किरणों को करके न्योच्छावर।
सागर के गहराई में रहके
मोति माणिक जलचर सोते।।
बैठके नौका में मछुआरे
गहरे पानी के भीतर जाते।
मछली पाने को बहते रहते
बाहर आ के घर को चलाते।।
दूर गगन है नीला नीला
उगता सूरज पीला पीला।
कैसा है यह चकित नजारा
पानी से शुभ्र रवि निकलता।।
गंगा यमुना ब्रह्मपुत्र
बहते रहते सदा सालभर।
जगह जगह से हो कर आ के
सागर में ही लीन हो जाते।।
संसाररूपी भवसागर में
बह जाते काश लहरे वन के।
अपने किनारे खोज के पाते
जन्ममृत्यु से पार हो जाते।।

**Saraswati Bhoi**
M. Ed (1st year)

# सामाजिकपरिवर्त्तने शिक्षायाः भूमिका

**स्वातीरेखासाहु**
शिक्षाचार्यप्रथमवर्षम्

मनुष्याणां पारस्परिकसम्बन्धानां व्यवस्था एव समाज इति कथ्यते। समाजे निवासकारणात् मानवः एकः सामाजिकः प्राणी वर्त्तते। मनुष्यः जन्मग्रहणानन्तरं सम्पूर्णजीवनं सामाजिकवातावरणे एव यापयति। समाजे निवसन् अन्यैः सामाजिकसदस्यैः सह सम्बन्धं स्थापयति, तैः सह व्यवहरति तथा च समाजस्य नियमान्तर्गते स्वकीयं जीवनं निर्वहति। समाजे प्रत्येकं मनुष्यस्य कानिचन कर्तव्यानि अधिकाराश्च भवन्ति। प्रत्येकं समाजस्य कश्चिदेकः आदर्शः संस्कृतिः, जनप्रथा, परम्परा च भवत्येव यः तस्य समाजस्य मनुष्याणां व्यवहारं निर्देशयति। ओतावे महोदयानां मतानुसारेण समाजः एकः समुदायः अथवा समुदायानाम् अंशः भवति।

**शिक्षासमाजयोः सम्बन्धः –**

ओतावे महोदयः कथयति यत् कस्मिंश्चित् समाजे दीयमाना शिक्षा समयानुसारं तथा परिवर्तते यथा समाजस्य परिवर्तनं जायते। समाजे संस्कृतेः अथवा जीवनपद्धतेः- यत् स्वरूपं भवति तथैव तस्य समाजस्य आवश्यकता अपि भवन्ति। सा आवश्यकता मनसि निधाय एव समाजे शिक्षाव्यवस्था क्रियते। समाजस्यावश्यकतासु परिवर्त्तनेन सह शिक्षायाः स्वरूपेऽपि परिवर्त्तनस्यावश्यकता दृश्यते। अतः विविधसमाजेषु विभिन्ना शिक्षाव्यवस्था प्रचलति। यथा–

**१. प्राचीनसमाजः (Ancient Society)–**

प्राचीनकाले मध्यकाले च समाजे शिक्षायाः स्वरूपं धार्मिकः आसीत् यतो हि तदानीन्तन समाजः धर्माधारितो आसीत्। शिक्षया बालकानां चारित्रिकविकासः जायते स्म।

**२. आधुनिकसमाजः (Modern Society) –**

आधुनिके युगे धर्मापेक्षया विज्ञानस्य विशेषमहत्त्वं दरीदृश्यते। अतः शिक्षया एव मानवस्य चिन्तनशक्तेः, तर्कशक्तेः, निर्णयशक्तेश्च विकासे बलं दीयते।

**२. फासिस्तसमाजः (Fasist Society) –** आसीत् समयः यदा जर्मन्, जापान्, इटलीइत्यादिषु देशेषु फासिस्तसमाजस्य प्रभुत्वमासीत्। यस्मिन् समाजे सर्वोच्चसत्ता शक्तिश्च कस्यचिदेकस्य हस्ते एकत्रिता भवति सः सत्तायाः बलेन निरङ्कुशतायां स्वाधिपत्यं स्थापयति।





**३. प्रजातान्त्रिकसमाजः (Democratic Society) –**

प्रजातान्त्रिकसमाजः स्वतन्त्रता, समानता, बन्धुत्वम्, धर्मनिरपेक्षता, सहिष्णुता, सहयोगभावना इत्यादि मूल्याधारितः भवति। अस्मिन् समाजे व्यक्तेः व्यक्तित्वं प्रति सम्मानं दीयते।

**४. प्रयोजनवादिसमाजः (Pragmatic Society) –**

समाजेऽस्मिन् क्रियायाः बुद्धेः च अपेक्षया परिस्थितेः वातावरणस्य च महत्त्वं भवति। एतेषां मतानुसारेण परिवर्त्तितपरिस्थित्यनुगुणं शिक्षायाः स्वरूपेऽपि परिवर्त्तनं भवेत्। नवीनपरिस्थितिषु नवीनमूल्यानुसारेण नूतनज्ञानस्य सत्तायाः च आवश्यकता भवति। तासाम् आवश्यकतानां पूर्तिः शिक्षया एव सम्भाव्यते।

**५. भौतिकवादिसमाजः (Materilistic Society) –**

अस्मिन् समाजे धनसम्पत्तेः भोगसाधनानामुपरि वा विशेषमहत्त्वं दीयते। अस्मिन्समाजे नैतिकतायाः आध्यात्मिकतायाः चारित्रिकतायाश्च महत्त्वं न दीयते।

**६. आदर्शवादिसमाजः (Idealistic Society) –**

अस्मिन् समाजे आध्यात्मिकप्रगत्यै महत्त्वं दीयते।

**सामाजिकपरिवर्तनं शिक्षा च –**

समाजस्य संरचनां मनुष्यः करोति। समाजस्याधारः मनुषस्य अन्तः क्रियाः भवन्ति। संसारे परिवर्तनमेका सार्वभौमिकी प्रक्रिया भवति। सामाजिकपरिवर्त्तनस्य विचारः प्रप्रथमतया प्रमुखसमाजशास्त्री आगबर्न महोदयस्य Social change इत्याख्यपुस्तकात् आरभ्यते।

**सामाजिकपरिवर्त्तनस्य सम्प्रत्ययः –**

संसारपरिवर्त्तनशीलः। परिवर्त्तनं सर्वदा उन्नतेः प्रगतेश्च प्रतीकः भवति। मैक्सबैबर महोदयः कथयति – सामाजिकपरिवर्त्तनस्य कारणं सांस्कृतिकः भवति। अतः अनेन ज्ञायते यत् संस्कृतेः परिवर्त्तनेन सामाजिकपरिवर्त्तनं स्वाभाविकप्रक्रिया भवति।

**सामाजिकपरिवर्त्तनस्य विविधपक्षाः –**

वर्त्तमाने युगे भारतः विभिन्नैः परिवर्त्तनैः सह अग्रसरः भवति। तत्र सामाजिकपरिवर्त्तनेऽपि आर्थिकपक्ष-राजनैतिकपक्ष-धार्मिकपक्ष-नैतिकपक्ष-वैज्ञानिकं प्राविधिकपक्षाः दरीदृश्यन्ते।

**सामाजिकपरिवर्त्तने शिक्षायाः भूमिका –**

सामाजिकपरिवर्त्तनाय समाजस्य सदस्याः अनिवार्येण शिक्षिताः स्युः। शिक्षा एव सामाजिकपरिवर्त्तनस्य महत्त्वपूर्णं शक्तं साधनं भवति। अतः शिक्षा मानवेभ्यः नवीनसत्यानामन्वेषणे तद् ग्रहणे शक्तिञ्च प्रददाति।

**सामाजिकपरिवर्त्तनाय शिक्षा विशिष्टं साधनम् –**

शिक्षया एव समाजे परिवर्त्तनं सम्भाव्यते। शिक्षां विना पूर्णरूपेण सामाजिकपरिवर्त्तनं भवितुं न शक्यते। स्वतन्त्रतानन्तरं तादृशी शिक्षानीति स्वीकृता यया बालकेषु लोकतान्त्रिकदृष्टिकोणानां विकासः भवेत्। स्वतन्त्रतानन्तरं समाजस्य परिवर्त्तनार्थम् अस्माभिरपि शिक्षायाः सहायता गृहीता। इंग्लेण्ड-अमेरिका-जापान् इत्यादीनां देशानां इतिहासात् ज्ञायते यत् शिक्षा एव सामाजिकपरिवर्त्तनस्य प्रमुखं कारणं भवति। आधुनिकशिक्षाशास्त्रिणः अपि एतां वार्त्तां प्रति विशेषध्यानं ददति यत् शिक्षा समाजस्य हस्ते काष्ठपुत्तलिका न भूत्वा समाजपरिवर्त्तनस्य उत्तरदायित्वमपि स्वीक्रियेत। विशिष्टशिक्षाशास्त्री के. जी. सैय्यदन महोदय स्वतन्त्रभारते शिक्षायाः भूमिकां वर्णयन्नाह– "सामजिकव्यवस्थायाः परिवर्तने शिक्षा सर्वदा अग्रणीया भवेत्, परन्तु इयं शिक्षा समाजस्याधीनं दासी भूत्वा एव सन्तुष्टा वर्तते।"

**सामाजिकपरिवर्त्तने विरोधसमाप्तिः –**

समाजेऽस्मिन् काश्चन शक्तयः सदैव परिवर्त्तनस्य विरोधे भवन्ति। कारणम् इत्युक्ते स्वकीयेऽस्तित्वे प्रतिघातस्य सम्भावना वर्त्तते। एताः शक्तयः परिवर्त्तनस्य विषये जनतासु संशयपूर्णविचारं कुर्वन्ति।

**शिक्षायाः उद्देश्यानां पुनर्निर्धारणम् –**

कोठारी आयोगानुसारेण शिक्षायाः उद्देश्यानि परिवर्त्तमानसामाजिकपरिस्थित्यनुगुणं पुनः निर्धारयते। उत्पादकतायाः वृद्ध्यर्थमपि विज्ञानं, शिक्षा, कार्यानुभवः, व्यवसायीकरणं, प्रविधिशिक्षा चेत्येतेषु विषयेषु प्राधान्यं दीयेत।





**सामाजिकपरिवर्त्तनस्य विश्लेषणम् –**

शिक्षायाः सहयोगेन वयं सामाजिकपरिवर्त्तनानां विश्लेषणं कुर्मः। युक्तियुक्तपरिवर्त्तनयोः मध्ये भिन्नतायाः ज्ञानं शिक्षया एव प्राप्यते। उदाहरणार्थं स्त्रीशिक्षायाः प्रसारः भौतिकप्रथायाः विरोधः, सतिप्रथायाः समापनमित्यादीनां सामाजिकपरिवर्त्तनानां विश्लेषणं कृत्वा सामान्यजनसमुदायेभ्यः सकारात्मकज्ञानं दातुं शक्यते। विश्लेषणानन्तरं ज्ञायते यत् किं परिवर्त्तनं समाजस्य हिताय किं च अहिताय इति।

**सामाजिकपरिवर्त्तनस्य नेतृत्वप्रदानम् –**

शिक्षा न केवलं नूतनविचारान् सृजति। अपि तु तादृशविचाराणां कार्यकरणाय नेतृत्वशक्तिः प्रददाति।

**उपसंहारः –**

उपयुक्तविवेचनेन ज्ञायते यत् सामाजिकपरिवर्त्तने शिक्षायाः महती भूमिका वर्त्तते। किन्तु इदमुद्देश्यं प्राप्तुं शिक्षारूपसाधनस्य प्रभावपूर्णतया प्रयोगः करणीयः। उद्देश्यं प्राप्तुं सामाजिक-आर्थिक-राजनैतिकमूल्यानाञ्च निर्माणमपि कृतम्। मूल्यानां प्राप्त्यर्थं शिक्षायाः स्वरूपमपि परिवर्तितम्। अतः समाजे विविधविषमता दरीदृश्यते। यतो हि अस्माकं परिवर्त्तिता शिक्षा समाजस्य स्वरूपनिर्माणे असमर्था भूत्वा समाजस्य सेविकारूपेण कार्यं विदधाति।

# My God

My God is very Brightly
Face smile slightly
Eye is very lightly
Hand very mighty
Voice is very sweety
Body bizarre heighty
His all things is lovely lovely
My God is very lovely
He is my father
She is my mother
He is removed all my disaster
She is purify my thought
MY God is always guided me.
He is the creator of this universe,
He is the forgiver all the sinner
My God is very much
He is my protector
I'e is my true savior
He is my existence
He is my heart
My God is my everything.

**Name- Subhashree Rout**
Dept- Shikshashastra







# Stepping Stone to Success

**Debashree Maharana**
Shiksha Sastri - 2nd Year

Life is a collection of changes. So we shouldn't avoid changes because some changes give success and some act as stepping stone to success.

Success means many things to many people know throughly what the word success means to you personally. You can achieve success there is an element of greatness in each of us.

No force on earth can prevent you from achieving what you want to achieve. For this, you must be determined with firm faith in yourself and God. A burning desire is the greatest motivator of every human activity. Concentrate on your strength, not on your weakness. If you want to advance in life, make sure that your want doesn't advance. Time lost may be repented but never regained.

There is another thing in this world without avoiding which we cannot get success. And that is fear. Fear is the most common reason for failure. It is the nature of man to fret and worry. Actually the reality of our failure is : we are not scared of heights, we are afraid of falling. We are not afraid of trying again. We are afraid of getting hurt back for the same reason. Worry alters things only in a negative way. Worry breeds fear.

Worrying about "Tomorrow" is senseless. You can not live in the "Tomorrow". You can live only in the present.

When you worry about the success of some future project, you are wasting energy. Do one thing at a time- at job at one time.

So, from the above discussions we arrive at this point: To get anywhere you must go in the right direction and the only way to get anywhere is to start from where you are.



# आधुनिकसंस्कृतशिक्षायाः स्वरूपम्

रश्मिता साहुः
शिक्षाशास्त्री द्वितीयवर्षम्

**जानाति सकलां विद्यां जानाति सकलां कलाम् ।**
**आत्मानं नैव जानाति यो न जानाति संस्कृतम् ।।**

भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा। सम् उपसर्गपूर्वकं कृञ् धातोः क्त प्रत्यये कृते सुडागमे संस्कृतमिति शब्दः निष्पन्नः भवति। संस्कृतमित्युक्ते सम्यकरूपेण कृतं परिमार्जितं भाषा। सर्वासां भारतीयभाषाणां संस्कृतभाषा जनन्येव। कथमिति कारणात् चेत् यथा– त्रिवेणी संगमे सरस्वती नदी अन्तर्लिना अस्ति तथैव संस्कृतभाषा सर्वासु भारतीयभाषासु अन्तर्लीना भवति। यथा शिशुः मातुः मुखात् श्रुत्वा भाषा मातृभाषा कथ्यते तथैव संस्कृतं सर्वासां भाषाणां मातृभाषा स्वरूपे परिगण्यते। विश्वस्य समस्तभाषाणाम् उद्गमः संस्कृतात् ग्रीक्, लैटिन मन्यते।

संस्कृते संस्कृतिर्ज्ञेया संस्कृते सकलाः कलाः।
संस्कृते सकलं ज्ञानं संस्कृते किन्न विद्यते ?

शिक्षा इति शब्दः शिक्ष् विद्योपादाने इत्यस्मात् धातोः निष्पन्नः भवति। धर्मशास्त्रानुसारं चतुर्दशविद्याः सन्ति। यथा– चत्वारो वेदाः, षड् वेदाङ्गानि, न्यायः, मीमांसा, धर्मशास्त्रम्, पुराणश्चेति। वेद-पुराण-रामायण–महाभारत–भागवतादयःसंस्कृतभाषायामेव सन्ति। बालकस्य जन्मादारभ्य क्रियमाणाः जातकर्म-नामकरण–अन्नप्रासनादयः षोडशसंस्काराः अपि संस्कृतभाषया विधीयन्ते। पूजापाठः, यज्ञयागादिक्रियाश्च अस्यां भाषायां प्रचलन्ति। संस्कृतं भारतीयसंस्कृतेः आत्मस्वरूपमस्ति।

अधुना प्रायः दशमकक्षापर्यन्तं संस्कृतं सर्वेषु विद्यालयेषु अनिवार्या आसीत्। उच्चमाध्यमिकस्तरेषु संस्कृतस्य स्थानं वैकल्पिकरूपेण वर्तते। संस्कृतमस्माकं देशभाषा आसीत्। अतः अधुना धार्मिकभाषात्वेन शिशूनां चारित्रिकविकासार्थं संस्कृतशिक्षा प्रदीयते। अधुना समाजे संस्कृतभाषा विलोपस्वरूपां संस्कृतभाषां विनापि समाजे कार्यं सिद्धति।

त्रिभाषासूत्रान्तर्गतेषु विद्यालयेषु तिसृणां भाषाणां शिक्षणम् अनिर्वार्यं स्वीकृतम्। त्रिषु भाषासु प्रथममातृभाषा, द्वितीयराष्ट्रभाषा एवं तृतीयवैदेशिकभाषा आङ्गलभाषाः च सन्ति। सर्वेषु राज्येषु इयं शिक्षाव्यवस्था प्रचलितासीत्। त्रिभाषासूत्रेषु संस्कृतशिक्षणम् अन्तर्गतं न भवेत्। उच्चमाध्यमिकस्तरेषु





च संस्कृतं वैकल्पिकविषयत्वेन स्वतन्त्रविषयरूपेण प्रचलति। संस्कृताध्ययनस्य दृष्ट्या भारतवर्षे प्रायशः द्वयोः पाठ्यक्रमयोः व्यवस्था अस्ति। शास्त्रीय विद्यालय–महाविद्यालयेषु एवमाधुनिकविद्यालय–महाविद्यालयेषु च षष्ठिकक्षातः दशमकक्षापर्यन्तं संस्कृतशिक्षा प्रचलति।

वैदेशिकाः भारतीयमुन्हिषिभिः विरचितानां वेद–भागवत–पुराण–धर्मशास्त्रानुगुणं स्व राष्ट्रनीत्या परिपालननिमितं स्वराष्ट्रस्य अग्रगतिनिमित्तं प्रयोगं कुर्वन्ति। परन्तु वयं सर्वे भारतीयाः संस्कृतभाषायाः महत्वं ज्ञात्वा अपि तस्य प्रयोगः, प्रचारः, प्रसारः च न कुर्मः। एतत्तु वहु निन्दनीया कथा अस्ति।

**संस्कृतक्षेत्रे दृश्यमानाः बहुविधसमस्याः–**

समस्या कस्मिन् क्षेत्रे न विद्यते। समस्या अस्ति चेत् तस्याः समाधानमपि अस्ति। संस्कृतक्षेत्रेऽपि काश्चन समस्याः वर्तन्ते। यथा–

- संस्कृतं संस्कृतभाषया अध्यापयितुं शिक्षकाणाम् अभावः।
- जीविकोपार्जनस्य समस्या प्रमुखा।
- संस्कृतपत्रपत्रिकाणामभावः।
- पाठ्यक्रमेषु कुत्रापि संस्कृतमनिवार्यं नास्ति।
- संस्कृतस्य विषये सर्वकारस्य अनादरभावः।
- अभिभावकानां छात्राणां च उभयोः संस्कृतविषयं प्रति उदासीनता।
- पाठ्यपुस्तकेषु कालानुगुणम् आधुनिकविषयाणां समावेशः न दृश्यते।
- प्रशिक्षणमहाविद्यालयेषु आधुनिकतमानामुपकरणानाम् अभावोऽस्ति।

एवमेव प्रकारेण संस्कृतक्षेत्रे बहुविधसमस्याः दृश्यन्ते। तासां समस्यानां परिहारः संस्कृतज्ञैः संस्कृताभिमानिभिः चिन्तनीयः। समस्यामात्रं गृहीत्वा पलायनमुखत्वं संस्कृतज्ञेषु न शोभते। अतः क्षेत्रेऽस्मिन् स्थित्वा समस्यापरिहारोपायचिन्तनं श्रेयस्करम्। संस्कृतभाषायाः विकासेन सर्वासामपि भारतीयभाषाणां विकासः जायते। अस्यां भाषायां भारतस्य विश्वस्य च ज्ञानविज्ञानराशिः निहितः वर्तते। संस्कृतभारतं हि समर्थभारतम्।

**संस्कृतेन सुसम्पन्नं भारतं भारतमुच्यते ।**
**संस्कृतेन विना देशः केवलं चोण्डियोच्यते ।।**

# अभिप्रेरणायाः सम्प्रत्ययः

चन्दनकुमारनायकः
कक्षा–शिक्षाशास्त्रि द्वितीयवर्षम्

ॐ उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्योर्मृत्युं नमाम्यहम् ।।

## उपक्रमः(Introduction)

भगवत्सर्गेषु वेविद्यमानेषु देहभृत्सु मनुजः सर्वश्रेष्ठजीवत्वेन निर्मितोऽस्ति। कालक्रमेण भगवदनुकम्पया स्वनैसर्गिकप्रतिभया च तेषु मनुजेषु केचन मन्त्रद्रष्टारः परमर्षयः, आचार्याः, अखिलशास्त्रधुरिणः, मनस्तत्त्वविदः, व्यवहारविदः च सम्बभूवुः। तदनुगुणं तैः तैः विभूतिपुरुषैः नैकानि शास्त्राणि संविरचय्य शास्त्रानुगुणमुपाधिं लब्धवन्तः। तेषूपाधिधृत्सु मनोवैज्ञानिकाः इति अन्यतमाः वर्तन्ते। तैः मनोवैज्ञानिकैः मनोविज्ञानशास्त्रम् इति प्रणीतम्। यदा मनोविज्ञानशास्त्रस्य शैक्षिकपरिप्रेक्ष्ये कार्यान्वयनं संजातं, तदा तत् शास्त्रं शिक्षामनोविज्ञानशास्त्रम् इति नाम्नैव संचक्षते। तदनुरूपं शिक्षामनोवैज्ञानिकाः इति उद्भाविता आसते।

## विषयप्रवेशः(Description of the Subject)

शिक्षामनोविज्ञाने विचारितेषु विषयेषु अभिप्रेरणायाः सम्प्रत्ययः (Concept of Motivation) इति विषयः नितरामितरविचारविलक्षणः। तर्हि केयम् अभिप्रेरणा, किंच तस्याः निर्वचनं, शास्त्रेऽस्मिन्नस्याः स्वरूपं कथं प्रतिपादितम् इत्येवं जिज्ञासायां समुत्पन्नायां सति शिक्षामनोवैज्ञानिकाः इत्थम् अभिप्रयन्ति-

अभिप्रेरणा, प्रेरणम्, अभिप्रेरणम्, प्रेरणा इत्यादिसमानार्थकशब्दानामङ्ग्लभाषायां मोटिवेशन् (Motivation) इति कथ्यते। मोटिवेशन् (Motivation) इति अयमाङ्ग्लशब्दः मुवर(Movere) इति लैटिनशब्दान्निष्पन्न आस्ते। यस्यार्थोऽस्ति मूव(Move) चलनमिति। किमपि कार्यं प्रति चलनं चलनप्रक्रिया वा मोटिवेशन् (Motivation) इत्यस्य अभिप्रेरणम् इत्यस्य शाब्दिकार्थः भवति। अनेन चलनसम्पादनेन किमपि कार्यं कर्तुं प्रोत्साहनं लभ्यते। येन मानवः उत्तमं कार्यं कर्तुमग्रेसरी भवति। व्यवहारस्य किमपि कारणम् आन्तरिकं बाह्यं च द्विधा भवति। तान्येव कारणानि च अभिप्रेरणम् इत्युच्यते। एतान्यभिप्रेरणानि सर्वादौ छात्रं क्रियाशीलं कुर्वन्ति। तदनु व्यवहारस्य कारणेनाभिप्रेरितः सन्





मानवः क्रियाशीलो भवति। येन क्रियाशीलेन छात्रो मानवो वा नूतनविषयान् ज्ञातुं प्रेरणमाप्नोति। किमपि निश्चितं लक्ष्यं प्राप्तुं यया मानवः छात्राः वा क्रियाशीलः भवति सा प्रेरणा अथवा अभिप्रेरणम्। एषा अभिप्रेरणा तल्लक्ष्यं प्राप्तुं छात्रेषु मनुजेषु वा रुचिमुद्भावयति। पुनश्चैषैका आन्तरिकशक्तिः वर्तते यया छात्रं मनुजं वा कार्यं कर्तुमुत्तेजयति यथा भवता एतत् कार्यं करणीयम्। 'रामादिवत् प्रवर्तितव्यं न रावणादिवत्'।

### अभिप्रेरणस्य परिभाषा-

१.गुडमहोदयस्यानुसारम्- "कस्यचित् कार्यस्य आरम्भः, प्रवर्तनं, नियन्त्रणं च अभिप्रेरणं भवति"।

"According to Mr. Good-'Motivation is the process of arousing, sustaining and regulating activity"

२. एफ्. जे. मैक्डोनाल्डमहोदयस्यानुसारम्-"अभिप्रेरणं नाम व्यक्तौ तदन्तरङ्गे वा जायमानं शक्तेः परिवर्तनं, यत् भावनात्मकजागृत्या पूर्व-अपेक्षिताभिः उद्दिष्टाभिः क्रियाभिः अनुक्रियायाः निर्धारणं भवति"।

"According to Mr. F.J.Mcdonald - Motivation is an emergency change within the person characterized by affective arousal and anticipatory goal reactions."

३. ब्लेयरमहोदयस्य, जोन्समहोदयस्य, सिम्पसनमहोदयस्य चानुसारम्- "अध्येतुः आन्तरिकशक्तीनाम् आवश्यकतानां वा विभिन्नानि लक्ष्यानि प्रति दिशानिर्देशनमेव अभिप्रेरणम्"।

"According to Mr.Blair, Mr.Jones and Mr.Simpson-'Motivation is a process in which the learner's internal energies or needs are directed towards various goals and objects in his environment."

४.जेम्सड्रेवरमहोदयस्यानुसारम्-"अभिप्रेरणं किंचन भावात्मक-क्रियात्मककारकं वर्तते यत् चैतन्येन अचैतन्येन वा निश्चितलक्ष्यप्राप्तये मानवस्य तद् व्यवहारस्य च दिशानिर्देशनं करोति"।

"According to Mr. James Drever-'Motivation is an affective, conative, cognitive factor which operates in determining the direction of an individual's behaviour towards an end or goal apprehended consciously or unconsciously."

५. एटकिन्सनमहोदयस्यानुसारम्-"एकं प्रभावं नैकान् प्रभावान् वा उत्पादयितुं कार्यकरणप्रवृत्तेः प्रोत्साहः अभिप्रेरणं भवति"।

"According to Mr. Atkinson-'The term motivation refers to the arousal of a tendency to act to produce one or more effects."

उपसंहार:(Conclusion)

एवमुपर्युक्तपरिभाषाणां पर्यालोचनेनेदमभिज्ञायते, छात्रेषु मनुजेषु वाभिप्रेरितव्यवहार-स्वरूपस्याभिप्रेरणस्यावश्यकता सुतरां नितराम् अतितराम् अस्त्येव। शिक्षकः अध्यनेनाभिप्रेरणेन स्वकार्यक्षेत्रे छात्रान् सम्यगवबोधयेच्चेत् अभिप्रेरितव्यवहारस्वरूपम् अभिप्रेरणम् इति सर्वेषु कार्येषु समाचरणीयम् इति।

## आभासिकविश्वविद्यालयः आभासिककक्षाकक्षश्च

**सान्तनि भूयाँ**

शिक्षाशास्त्रीद्वितीयवर्षम्

अद्यत्वे विरञ्चिविरचितप्रपञ्चस्य निर्माणे विज्ञानस्य प्रविधेश्च महत्वपूर्णभूमिकावरीवर्ती। सम्प्रति जनानां चिन्तनम् अनयोः प्रभावेण वैज्ञानिकं सञ्जातम्। मानवाः सामाजिकजीवनेऽपि अनयोः सिद्धान्तान् प्रयोगान् च क्रियान्वयितुं प्रयतमानाः वर्तन्ते। यन्त्राणामाविष्कारत्वात् साम्प्रतं समाजा यान्त्रिकीकरणस्य प्रभावः अवलोक्यते। यान्त्रिकीकरणक्षेत्रे संगणकस्य विशिष्टमहत्वं वर्तते। प्रत्येकस्मिन् क्षेत्रे वर्तमानसमये संगणकस्यावश्यकता अनुभूयते। किञ्च शिक्षायाः गुणात्मकस्वरूपे सङ्गणकस्य महत्वं सुतरां वर्तते एव, येन शिक्षाजगति यान्त्रिकीकरणं सङ्गणकस्य कालः इत्युच्यते। अन्तर्जालक्षेत्रे १९९०तमे वर्षे विश्वविस्तारजालपुटम् WWW इत्यस्य आविष्कारः शिक्षाक्षेत्रे नवीनक्रन्ति समाजायत। एतस्य माध्यमेन प्रतिक्षेत्रं जायमनविषयवस्तु विश्वे एकस्मिन् कोणे स्थित्वापि ज्ञातुं शक्यते। जनसंख्यायाः निरन्तरं वृद्धिकारणात् पारम्परिकविश्वविद्यालयाः महाविद्यालयाः च सर्वान् जनान् प्रवेशयितुं समर्थाः न भवन्ति। अतः अस्याः समस्यायाः समाधानार्थम् अन्तर्जाले आभासीयविश्वविद्यालयाः (Virtual University) उद्घाट्यन्ते। साम्प्रतं शिक्षायाः आभासीकरणं जायमानं वर्तते। जनाः आभासिककक्षकक्षेषु पठन्ति। न





कोऽपि अध्ययनार्थम् अन्तराष्ट्रं राज्यं वा प्रति गच्छति। अपि तु स्वगृहे उपविश्य स्वीयरूच्यनुसारं पठितुं शक्नोति। जनसंख्यावृद्धिकारणत्वात् पारम्परिकमहाविद्यालयाः विश्वविद्यालयाः च सर्वेभ्यः छात्रेभ्यः उच्चशिक्षां प्रदातुं समर्थाः न प्रतीयन्ते। अतः अस्याः समस्यायाः समाधानार्थं पत्राचारपाठ्यक्रम-मुक्तविश्वविद्यालययोः सम्प्रत्ययः समारभ्यत्. किन्तु एषा व्यवस्थाऽपि समस्या समाधानाय असमर्था जाता। बहुभिः वैदेशिकविश्वविद्यालयैः अन्यराष्ट्रस्य छात्रेभ्यः उच्चशिक्षायै विशिष्टा व्यवस्था परिकल्पिता। एभिः विश्वविद्यालयैः अन्तर्जालमाध्यमेन पारम्परिकविश्वविद्यालयस्य सीमायाः आकारः संवर्धितः। एतादृशाः विश्वविद्यालयाः आभासिकविश्वविद्यालयत्वन व्यवह्रियन्ते। आभासिकविश्वविद्यालयाः सर्वेषां छात्राणां नामाङ्कनं कृत्वा तेषां पठनमनोरथं सम्पूरयन्ति।

आभासिकविश्वविद्यालयस्य कक्षाकक्षस्य वा कार्यशैली-

❖ आभासिकविश्वविद्यालयस्य कक्षकक्षव्वस्थायां विषयविशेषज्ञैः अनुभवशिक्षकैः वा कश्चन एकः विषयः अध्याप्येत। अध्यापनं मुदितं दूरसमेननमाध्यमेन प्रसारणं च कर्तुं शक्यते।

❖ अनुभवशिक्षकैः विषयविशेषज्ञैः वा निर्मिता विशिष्टाध्ययनसामग्री कक्षाकक्षस्य संस्थायाः वा जालपुटे निक्षिप्यते। छात्राः आवश्यकतानुसारं सामग्रीणां Download(अभिधारणं) कर्तुं शक्नुयुः। तदर्थं नामाङ्कितछात्रेभ्यः साङ्केतिकशब्दस्य(Password) इत्यस्य व्यवस्था क्रियते।

❖ आभासिककक्षाकक्षव्यवस्थायाम् अध्ययनसामग्र्यः अनुदेशनात्मकनिर्देशान् च CD ROM, Pendrive माध्यमेन वितरयितुं शक्यते, येन छात्राः स्वीय सौविध्यानुसारं सङ्गणकेन तस्यैव उपयोगम् अध्ययनाय कर्तुं शक्नुवन्ति।

**आभासिकविश्वविद्यालयस्य कक्षाकक्षस्य वा प्रमुखकेन्द्राणि-**

बहवः विश्वविद्यालयाः परम्परागताः भवन्ति, किन्तु आभासिकरूपेण पाठ्यक्रमस्य व्यवस्थां कुर्वन्ति, एतेषु केषाञ्चन नामानि-

1. Canadian Virtual University
2. Michigan Virtual University
3. Pakistan Virtual University
4. American Internatiional University, Bangladesh
5. Punjab University, India
6. Open University of California

**महत्त्वम् उपयोगिता च-**

अस्यां व्यवस्थायां नमनीयता भवति। अत्र छात्रः स्वगति-रुचि-सौविध्यानुसारम् अध्ययनं करोति। अस्यां व्यवस्थायां स्वल्पसमयः अपेक्ष्यते।अत्र छात्रः कुत्रापि च अध्ययनं कर्तुं शक्नोति। अस्यां अनुदेशनाधिगमयोः व्यवस्था सर्वदा भवति। इयं प्रणाली शिक्षकस्य कृते छात्रस्य च कृते रुचिकरी प्रेरणादायी च वर्तते। यतोहि अस्यां शिक्षणाधिगमानुभवाय विविधप्रकारकाणि नवप्राविधिकसाधनानि उपयुज्यन्ते। यथा CDE, ROM, D.V.D, Internert, Online Chating, WWW, Audio Video Conferencing, Mobile, Telephone च। एतेषां संसाधनानां प्रयोगेन शिक्षणाधिगमकार्यं सुतरां प्रभावपूर्णं भवति।

आभासिककक्षाकक्षव्यवस्था प्रवेश-नामाङ्कन-पाठ्यक्रम-शिक्षण-गृहकार्य-परियोजनाकार्य-परीक्षा-मूल्याङ्कन-परिणामज्ञान-शिक्षकस्य मार्गदर्शानादिकार्येषु उपयोगी वर्तते। साम्प्रतं छात्राः संस्थायाः व्यावसायिकोच्यतरपाठ्यक्रमस्य च प्रवेशसम्बन्धितसूचनाः गृहे उपविश्य ज्ञातुं शक्नुवन्ति।

**वैशिष्ट्यानि-**

आभासिककक्षाकक्षशिक्षणाधिगमस्य अधोलिखितानि वैशिष्ट ?यानि सन्ति।

❖ अस्मिन् आधुनिकप्रविधौ अनुदेशकः शिक्षको वा प्रच्छन्नरूपेण अन्तःक्रियात्मकभाषणं दातुं शक्नोति। अनुदेशनं मुद्रितं कृत्वा पुनः आवश्यकतानुसारं द्रष्टुं शक्यते।

❖ शिक्षणाधिगमप्रक्रियायां छात्रः क्रियाशीलो भूत्वा अनुदेशनं स्वीकरोति। प्रश्नं प्रष्टुं शिक्षकेण अन्यच्छात्रैः च अन्तःक्रियां कर्तुं शक्नोति।

❖ आभसिककक्षाकक्षप्रविधौ कक्षायाः व्यवस्थां त्रिधा व्यवस्थापयितुं शक्यते। स्थानीयशिक्षणाधिगमः दूरस्थाधिगमः दूरस्थानीयाधिगमश्च।

❖ अनया प्रणाल्या छात्रः विषयविशेषज्ञानाम् अनुभविशिक्षकाणां च अनुभवस्य लाभं स्वीकर्तुं शक्यते।

**न्यूनताः -**

१. अस्याः व्यवस्थायाः नमनीयत्वात् बालकस्याध्ययने दुष्परिणामः दृश्यते। सः तस्य शक्ति समयञ्च व्यर्थकार्येषु यापयति।

२. शिक्षायाः मुख्यमुद्देश्यं बालकस्य सर्वा ? ?गीणविकासः। अनया प्रणाल्या तस्य शारीरिक-मानसिक-संवेगात्मक-नैतिकविकासः न सम्भवति। यतोऽहि अस्यां परम्परागतशिक्षणवत् पाठ्यसहगामीक्रियाणां सामुदायिककार्यक्रमाणां व्यवस्था मित्रैः साकं सम्भूय कार्यकरणादीनामभावः परिलक्ष्यते।





३. इयं प्रणाली कष्टसाध्या वर्तते।

४. धनव्ययः अधिकः भवति।

५. सर्वे छात्राः अस्य प्रयोगं कर्तुमसमर्थाः सन्ति।

**उपसंहारः-**

शिक्षा एका गतिशीला प्रक्रिया। यतोहि स्थितिकालसमाजानुसारं शिक्षा परिवर्तते। आधुनिककाले विज्ञानस्याविष्कारेण संगणकस्य प्रादूर्भावेन च शिक्षायाः गतिः तीव्रा संजाता। फलतः अनुदितशिक्षायाः नवीनस्वरूपं द्रष्टुं शक्यते। आभासिकविश्वविद्यालयाः आभासिककक्षाकक्षश्च शिक्षायाः नवस्वरूपेषु अन्यतमाः वर्तन्ते। निरन्तरजनसंख्यावृद्धिकारणवशात् सर्वेभ्यः सुलभशिक्षाव्यवस्थांप्रापयितुं राष्ट्राणि असहायानि प्रतीयन्ते। राष्ट्रेभ्यः इयमेका विशिष्टसमस्यात्वेन दरीदृश्यते। यद्यपि अस्यामवस्थायां दोषाः वर्तन्ते तथापि गुणात्मकदृष्ट ?या दोषाणां दूरीकरणेन इयं व्यवस्था लाभकारिणी भविष्यतीति निश्चप्रचम्।

## गुरु का महत्व

**इन्दुमती बेहेरा**
शिक्षाशास्त्रिद्वितीयवर्षम्
अनुक्रमाङ्कः-९४

गुरु का महत्व कभी होगा न कम
भले ही कर लें कितनी भी उन्नति हम।
वैसे तो है इन्टरनेट पर हर प्रकार का ज्ञान
पर अच्छे-बुरे का नहीं उसे पहचान?

नहीं है शब्द कैसे करुँ धन्यवाद
बस चाहिए हर पल आप सब का आशीर्वाद।
हूँ जहाँ आज मैं उसमें है बडा योगदान
आप सबका जिन्होंने दिया मुझे इतना ज्ञान?

आपने बनाया मुझे इस योग्य कि
प्राप्त करूँ मैं अपना लक्ष्य।
दिया है हर समय आपने सहारा
जब भी लगा मुझे कि मैं हारा।
पर मैं हूँ कितनी मतलबी
याद किया न मैं नें आपको कभी दोबारा।

## गृहभाषा विद्यालयभाषा च

सुप्रियाजेना
शिक्षाशास्त्रिद्वितीयवर्षम्

मानवसभ्यतायाः संस्कृतेश्च विकासे भाषायाः स्थानं महत्वपूर्णं वर्तते। भाषायाः शिक्षा व्यक्तित्वस्य विकासे सहायिका भवति। सा व्यक्तेः दैनिकजीवने व्यावहारिककुशलतां कल्पयति। यदि शिक्षा जीवनस्य कृते महत्त्वपूर्णं तर्हि भाषा अस्य उद्देश्यस्य पूर्तये प्रकृष्टं साधनं भवति। भाषायाः विभिन्नानि रूपाणि भवन्ति। बालकः सर्वप्रथमे तु गृहे भाषायाः प्रयोगं करोति, तत्पश्चात् विद्यालयं गत्वा भाषायाः प्रयोगं करोति। अत्र उभयोः व्यवहारयोः भेदः दृश्यते। यथा– गृहभाषा विद्यालयभाषा च। तत्रादौ गृहभाषाविषये चर्चां कुर्मः।

**गृहभाषा–**

गृहभाषा सर्वाधिकप्रभावशालिनी प्रवलतया अस्याः प्रभावः व्यक्तेः मूलप्रकृतौ पालनपोषणायश्च प्रगाढो भवति। गृहभाषा बालकस्य मातृभाषामपि अस्ति। बालकः या भाषा मातृपितृभ्यां तथा





पारिवारिकसदस्येभ्यश्च संजानीते, व्यवहारिकस्वरूपेण शृणोति, स्वयमपि शुद्धरूपेण जानाति सा भाषा भवति गृहभाषा। गृहभाषायाः पारम्भिकावस्थायां बालकः ध्वन्यात्मक–संकेतयुक्तभाषायाः अधिगमे तथा च प्रयोगे अभ्यासरतः प्रतीयते। यस्याभिव्यक्तिः बालकस्य विविधानां चेष्टानां तथा क्रियारूपेण भवति। प्रथमचरणे बालकः जन्मसमये एव रोदनस्य क्रन्दनस्य च चेष्टां करोति। रोदनस्य चेष्टया सार्द्धम् एव अन्य ध्वनिं निष्कासयति, एते ध्वनयः पूर्णतः स्वाभाविकाः भवन्ति। एतेषामधिगमं न कर्तुं शक्यते। उपरोक्तक्रियाणामनन्तरं बालकेषु ध्वनिना क्रियाः तथा चेष्टाः आरभ्यन्ते। एतेषां ध्वनीनां माध्यमेन बालकः स्वरव्यञ्जनध्वनिनामभ्यासाय अवसरं प्राप्नोति। बालकाः किमपि शृण्वन्ति तथा यादृशः तेषामधिगमः भवति तादृशरूपेण तेषां ध्वनीनां विकासमपि भवति। विविधमुखमद्राणां तथा च संकेतादीनां भाषामपि बालकैः शनैः शनैः अवगम्यते।

अस्यामवस्थायां प्रायः एकः द्वयवा स्वरव्यञ्जनध्वनिनां निष्कासयित्वा तस्य पूर्त्ति तथा चेष्टया कुर्वन् दृश्यते। इत्थं बालकेषु मौखिकाभिव्यक्तिरूपेण भाषायाः विकासः भवति। तेन शब्देन वाक्येन च निर्मितं भाषायाः वाचनं तथा अवगमनं कुर्वन्ति ।

अतएव स्पष्टतया वक्तुं शक्यते यत्, गृहभाषा बालकस्य स्वाभाविकात्मिकी भाषा अस्ति। यस्यानुकरणं बालकः सारल्येन तथा अनौपचारिकरूपेण कर्तुं प्रभवति। गृहभाषायाः कृते शिक्षणस्यावश्यकता न विद्यते। बालकः स्वयम् एतत् ज्ञातुं समर्थो भवति।

गृहभाषायाः अनन्तरम् आयाति विद्यालयभाषा। विद्यालयभाषा इत्युक्ते किं ज्ञायते तत् अधः वर्णितमस्ति।

**विद्यालयभाषा–**

विद्यालयः शिक्षायाः औपचारिककेन्द्रं वर्तते। अतः अत्र या चभाषा अपेक्षिता सा औपचारिकभाषा अर्थात् अनुशासिता भाषा वाञ्छिता। विद्यालयीयभाषा गृहभाषातः काचित् पृथका अथवा अनुशासिता भवति। अत्र भाषायाः मौखिकविकासेन साकं लिखितविकासस्य आवश्यकता अनुभूयते। विद्यालये बालकानां शिक्षाग्रहणस्य अनन्तरं बालकेषु पठन–लेखनसम्वन्धि कौशलस्य विकासमपि प्रारभ्यते। एवं प्रकारेण भाषायाः मौखिक एवं लिखितरूपेषु सम्बन्धितकौशलानामर्जने तथा च विकासे शनैः शनैः

अभिवर्धनं भवति। अनेन सह भाषा न केवलं विचारविनिमयस्य साधनमपितु ज्ञानप्राप्तेः ... शिक्षाग्रहणस्यमाध्यमेन स्वकीयं सर्वा ? ... पूर्णतया समर्थो भवति। विद्यालयस्य ... दोषरहिता, शुद्धा, उच्चस्तरीयभाषा भवति। सा भाषा तु शिक्षायाः माध्यमः भवति।

बालकः प्रायतः पञ्चवर्षस्यानन्तरं विद्यालये प्रवेशं प्राप्नोति। विद्यालयस्य शिक्षां गृह्णाति। बालकस्य शब्दभण्डारे तीव्रगत्या अभिवर्द्धनं भवति। विद्यालये बालकः अनेकासु शैक्षिक सामाजिकक्रियासु भागं गृह्णाति। येन तस्य शब्दभण्डारः सीमितं न भूत्वा बहु विस्तृतं भवति।

अतएव स्वीक्रियते यत् विद्यालये या भाषा स्वीकृता तस्याः अध्ययनं विधिवत् रूपेण कारणीयम्, तस्य शिक्षणमपि आवश्यकम्।





# धैर्यम्

लिपिका नायक
शिक्षाशास्त्री द्वितीयवर्षम्
अनुक्रमाङ्कः-८

लोकमनुष्याणाम् लोककल्याणहेतवश्च ये गुणाः तेषु धैर्यमपि जनानां कृते महदुपकारकं, कल्याणकरं, सम्पादं भवति। यदि धैर्यं न स्यात् तर्हि सर्वेषां जनानां जीवनमतीवदुःखमयं स्यात्। धैर्येण विना सर्वे मनुष्याः आचारहीनाः भवन्ति। धैर्यं जनानां विभूषणम् भवति। अतः ये जनाः धैर्यं धृत्वा कार्यं कुर्वन्ति ते अवश्यमेव साफल्यं प्राप्नुवन्ति। आपत्कालेऽपि कदापि धैर्यं न त्याज्यम्।

यथोक्तम्-

"त्याज्यं न धैर्यं विधुरेऽपि काले धैर्यात् कदाचिद्गतिमाप्नुयात् सः।
यथा समुद्रेऽपि च पोतभङ्गे तां यात्रिको वाञ्छति तर्तुमेव"।।

मनुष्यः भावप्रधानः प्राणी भवति। सः सुखे सुखी, दुःखे च दुःखी भवति। परं ये मनस्विनो भवन्ति ते तु धैर्यवन्तः एव कथ्यन्ते। उक्तमस्ति-

"दुःखमापतितं सेव्यं सुखमापतितं तथा।
चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च" ?

अर्थात् रथस्य चक्रं घूर्णनसमये यथाक्रमं उर्ध्वम् अधश्च भवति, तथैव अस्मिन् संसारे दुःखादनन्तरं सुखं, सुखादनन्तरं दुःखमागमिष्यति। एतस्मात् कारणात् दुःखमागच्छेत् अथवा सुखं तत् सर्वं धैर्येण गृह्णीयात्। मनस्विनो सम्पत्तौ विपत्तौ च एकरूपताम् आवहन्ति न कदापि दुःखेष्वनुद्विग्नमनाः भवन्ति न च सुखेषु विगतस्पृहः। गीतायां द्वितीयाऽध्याये भगवान् श्रीकृष्णेन अर्जुनं प्रति उक्तम्-

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः।
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते।।

मूढपुरुषाणां स्थितिषु सर्वथा महद् वैपरित्यमालोक्यते ते स्वल्पेऽपि कष्टे आत्मघातं विषभक्षणं वा समाचरन्ति, येन यमलोकं गच्छन्ति। तत्र ते शान्ति न लभन्ते। आपत्काले धैर्य विना क्षणमपि जीवितुं न शक्यते। रामायणे वर्णितमस्ति अशोकवनवाटिकायां रघुपतिविरहोत्कण्ठिताजनकात्मना सीताऽपि धैर्यमाश्रित्य स्वशरीरत्यागात् विरराम। महाभारते वर्णितं पाण्डवाः धैर्यवलेन महाभारतयुद्धसागरं पारं कर्तुं समर्थाः अभवन् । अस्मात् ज्ञायते धैर्य नाम स्थिरबुद्धिया। यथा– विघ्नभयेन कार्यं नीच्चैः न प्रारभ्यते। मध्यमपुरुषाः कार्यं प्रारभ्य विघ्नैः प्रतिहताः मध्ये एव विरमन्ति। परन्तु एतादृशाः अपि पुरुषाः सन्ति ये मुहुर्मुहुः विघ्नैः प्रतिहन्यमानाः अपि प्रारब्ध कार्यं न परित्यजन्ति। ते एव धीराः।

धैर्यबलेन मानवाः सर्वं कर्तुं प्रभवन्ति। अतः कदापि धैर्यं न त्याज्यम्। यदि धैर्यपूर्वकम् असम्भवकार्यस्य सिद्ध ?यर्थ प्रतिकारं कुर्यात् तर्हि सफलता लभते। विपत्तौ धैर्यमेव साहाय्यं वितनुते नापरः। अतः कदापि धैर्यं न त्याज्यम्। सर्वासु अवस्थासु धैर्यमवलम्ब्य एव कार्यं करणीयम्।

# पञ्चाङ्गपरिचयः

**श्रीदेवीगंगोइ**

शिक्षाशास्त्रद्वितीयवर्षम्

**शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसामिति ।**

**ज्योतिषामयनं चैव षडंगो वेद उच्यते ।।**

वेदाङ्गेषु ज्योतिषं भवति एकं वेदाङ्गम्। अखिलज्ञाननिधेः वेदपुरुषस्य नेत्रस्थानीयमस्ति ज्योतिषशास्त्रम्।यथोक्तं पाणीनीयशिक्षायां महर्षिपाणिनी – "ज्योतिषानयनं चक्षुः" इति। ज्योतिषशास्त्रे समयशुभाशुभविचारेण साकं जातकस्य भूतवर्तमानभविष्यविषयाः भाग्यकर्मादि विषयाश्च सम्यग्तया अभिज्ञातुं शक्यते। ज्योतिषशास्त्रस्य कालविवेचनात्मकं रूपं भवति पञ्चाङ्गम्। जगतः समस्तशुभाशुभकर्मणः आधारः भवति पञ्चाङ्गम्। पञ्चाङ्गेन शुभसमयमभिज्ञाय कर्मप्रारम्भणीयं तथा सति अनुष्ठानस्य साफल्यं भवेत्। पञ्चाङ्गस्य पञ्च अङ्गानि यथा– दिवसः, तिथिः, करणः, नक्षत्रं, योगः च ग्रहस्थित्यानुसारेण निर्धारितानि भवन्ति।





**तिथिर्वारञ्च नक्षत्रं योगः करण एव च।**

**पञ्चस्वेते शुद्धेषु समयः शुद्धः उच्यते ।।**

तिथिः -

तिथिः पञ्चाङ्गस्य प्रथमम् अङ्गमास्ति। एकस्मिन् मासे त्रिंशत् दिनानि भवन्ति। पञ्चदश पञ्चदश दिनात्मकानि शुक्लकृष्णः इति द्वाभ्यां पक्षाभ्याम् अभिधीयते। एकस्मिन् पक्षे पञ्चदशदिनानि भवन्ति। इमे दिवसाः तिथिसंज्ञकाः, शुक्लपक्षस्य अन्तिमतिथिः पूर्णिमा, कृष्णपक्षस्य अन्तिमतिथिः अमावास्या अस्ति। प्रत्येकं तिथेः पूर्णस्वामि भवति।

| तिथयः | स्वामी | संज्ञा |
|---|---|---|
| प्रतिपद | अग्नि | नन्दा |
| द्वितीया | ब्रह्मा | भद्रा |
| तृतीया | गौरी | जया |
| चतुर्थी | गणेश | रिक्ता |
| पञ्चमी | सर्पः | पूर्णा |
| षष्ठी | कार्तिकेयः | नन्दा |
| सप्तमी | रविः | भद्रा |
| अष्टमी | शिवः | जया |
| नवमी | दुर्गा | रिक्ता |
| दशमी | अनन्त | पूर्णा |
| एकादशी | विश्वदेवा | नन्दा |
| द्वादशी . | हरिः | भद्रा |
| त्रयोदशी | कामदेवः | जया |
| चतुर्दशी | शिवः | रिक्ता |
| पूर्णिमा | शशी | पूर्णा |
| अमावास्या | पितरौ | |

द्वयोः पक्षयोः तिथीनां नन्दादि संज्ञा भवति।

वासरः -

पञ्चाङ्गस्य द्वितीयाङ्गवासरः अस्ति। द्वयोः सूर्योदयमध्यस्थकालः वासरः इति कथ्यते।सप्तवासराः सन्ति।

आदित्यचन्द्रमाभौमः बुधश्चाथः बृहस्पतिः।
शुक्रशनैश्चरश्चैते वासराः परिकीर्तिताः ?
सप्तदिनात्मकविधिः सप्ताहः इति उच्यते।

यथा- रविवासरः, सोमवासरः, म ? ?गलवासरः, बुधवासरः, बृहस्पतिवासरः, शुक्रवासरः, शनिवासरः च।

शुभाशुभसंख्यकवासराः

१.शुभवासराः- सोम-बुध-गुरु-शुक्रश्च

२.अशुभवासराः- म ? ?गल-शनि-रविश्च।

नक्षत्रम्

न क्षरतीति नक्षत्रम्। ताराणां समूहः नक्षत्रमित्युच्यते। समग्राकाशमण्डले भचक्रे सप्तविंशतिनक्षत्राणि विद्यन्ते। यथा-

**अश्विनी भरणी चैव कृत्तिका रोहिणी मृगः।**
**आर्द्रा पुनर्वसु पुष्यस्तथाश्लेषामघा ततः।।**
**पूर्वाफल्गुनिका चैव उत्तराफाल्गुनी ततः।**
**इस्टचित्रा तथा स्वाती विशाखा तदन्तरम् ।।**
**अनुराधा ततो ज्येष्ठा ततो मूलं निगद्यते।**
**पूर्वाषाढोत्तराषाढ त्वभिजिच्छ्रवणा ततः।।**
**धनिष्ठा शततराख्यां पूर्वाभाद्रपदा ततः।**
**उत्तराभाद्रपदा चैव श्वेत्येतानि भानि च।।**

प्रत्येकनक्षत्रस्य स्वामी अपि भवति यथा-

| नक्षत्रम् | स्वामी |
|---|---|
| १ अश्विन्याः | अश्विनीकुमारः |
| २ भरण्याः | यमः |
| ३ कृतिकायाः | अग्निः |





| नक्षत्रम् | स्वामी |
|---|---|
| | ब्रह्मा |
| ४ रोहिण्याः | चन्द्रमा |
| ५ मृगशिरायाः | शिवः |
| ६ आद्रायाः | आदितिः |
| ७ पुनर्वसोः | गुरुः |
| ८ पुष्यस्य | सर्पः |
| ९ आश्लेषा | अयंमाः |
| १० उत्तराफाल्गुनी | सूर्यः |
| ११ पूर्वाफाल्गुनी | अयंमाः |
| १२ उषा | सूर्यः |
| १३ चित्रा | त्वष्टा |
| १४ स्वाती | वायुः |
| १५ विशाखा | शुकाग्निः |
| १६ अनुराधा | मित्रम् |
| १७ ज्येष्ठा | इन्द्रः |
| १८ मूला | राक्षसः |
| १९ पूर्वाषाढा | जलम् |
| २० उत्तराषाढा | विश्वदेवः |
| २१ श्रवणा | विष्णुः |
| २२ धनिष्ठा | वसुः |
| २३ शतभिषा | वरुणः |
| २४ पूर्वभाद्रपदा | अजैकुपादः |
| २५ उत्तरभाद्रपदा | ब्रह्मा |
| २६ अभिजितः | अहिबुधनीयः |
| २७ रेवती | |

एतत् अतिरिक्तमभिजिदपि अष्टविंशतितमं नक्षत्रमस्ति। एकस्य नक्षत्रस्य मानं ३६०/२७ भवति।

**योगः**

ज्योतिषशास्त्रे योगविचारः महत्वपूर्णं स्थानमावहति। कुण्डल्यां ग्रह-नक्षत्र-राशिनां स्थित्यनुशोधेन योगो भवति। तेषां योगनुशोधेन च जातकस्य भाग्यनिर्धारणं क्रियते। तथा-जीवनपर्याया: फलाफलं विचार्यते। भचक्रे सूर्यचन्द्रमसोः स्थित्यनुशेधेन सप्तविंशतियोगाः कल्पिताः सन्ति। यथा- १.विष्कुम्भः-यमः, २.प्रीतिः-विष्णुः, ३.आयुष्मिन्-चन्द्रः, ४. सौभाग्यः – ब्रह्मा, ५. शोभत-बृहस्पतिः, ६.अतिगण्डः-चन्द्रः, ७. सुकर्मा-जलम्, ८. धृतिः-सर्पः, ९.शूलः-अग्निः, १०.गण्डः-सूर्यः, ११.वृद्धिः-वायुः, १२.ध्रूवः-भगः, १३.व्याघातः-वायुः, १४.हर्षगः-भगः, १५.वज्रः-वरुणः, १६.सिद्धिः-गणेशः, १७.व्यतिपातः-रूद्रः, १८.वरीयान्-कुवेरः, १९.परिधः-विश्ववः, २०.शिवः-मित्रम्, २१.साध्यः-कलिकेलः, २२.शुभः-लक्ष्मी, २३.शुक्लः-पार्वती, २४.ब्रह्मः-अश्विनी, २५.इन्द्रः-पितरः, २६.वैधृतिः-दितिः, २७.सिद्धः

**करणम् -**

पञ्चाङ्गस्य अन्तिमभागः करणं वर्तते। तिथ्यार्ध करणम्। एकस्मिन् तिथौ द्वे करणे स्तः चरस्थिरकरणाञ्च।

१. **चरकरणं सप्तविधम्।**

**बवश्च बालवश्चैव कौलव तैतलस्तथा।**

**गरश्च वणिजोविष्टिः सप्तैते करणानि तु ।।**

यथा- ववः, बालवः, कौलवः, तैतलः, गरः, वणिजः, विष्टिः।

२. **स्थिरकरणं चतुर्विधम्।**

यथा- शकुनिः, चतुस्पादः, नागः, किंस्तुघ्नः।

चरकरणानां प्रारम्भः शुक्लप्रतिपद-उत्तरार्धतः भवति। स्थिरकरणानां प्रारम्भः कृष्णचतुर्दशी-उत्तरार्धतः भवति। एतेषां स्थानानि निश्चितं वर्तते। एतत् करणात् ये स्थिरसंज्ञकाः भवन्ति।





# योगदर्शनेशिक्षातत्त्वम्

**विनोदिनी नायकः**

दर्शनं नाम दृश्यते ज्ञायते विचार्यते परमतत्वमनेनेति दर्शनम्। दृश् धातोः करणे ल्युट् प्रत्ययेन दर्शनशब्दस्य निष्पत्तिः जाता। सत्यस्यानुसन्धानेन दर्शनम्। दर्शनं द्विविधम्, प्राच्यपाश्चात्यभेदेन। पुनः प्राच्यदर्शनं द्विविधमास्तिकनास्तिकभेदेन। प्राच्यदर्शनस्य अन्य नाम भारतीयदर्शनम्। ये वेदस्य प्रामाण्यम? ?गीकुर्वन्ति ते आस्तिकाः। आस्तिकदर्शनं षड् विधम्। यथा-न्याय-वैशेषिक-सांख्य-योग-पूर्वमीमांसा-उत्तरमीमांसा चेति। एतेषु षट्सु दर्शनेषु योगदर्शनमन्यतमम्।

योगदर्शनस्य कर्ता महर्षिपतञ्जलिः। महर्षिपतञ्जलिः केवलं योगदर्शनस्य रचयिता न अपितु व्याकरणमहाभाष्यस्यापि च आयुर्वेदस्य चरकसंहितायाः रचयिता। यथोक्तम्-

"योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।

योऽपाकरत्तं प्रवरं मुनीनां पतञ्जलीं प्राञ्जलिरानमोऽस्मि" ?.भोजवृत्तिः

योगदर्शने चत्वारः पादाः सन्ति। यथा- १ समाधिपादः, २ साधनपादः, ३ विभूतिपादः, ४ कैवल्यपादश्चेति।१९५ सूत्राणि वर्तन्ते अस्मिन् दर्शने । योगदर्शनानुसारं योगस्य तात्पर्यं योगश्चितवृत्तिनिरोधः। अर्थात् चित्तवृतेः निरोधः एव योगोच्यते। योगः-युज् समाधौ युज्यते। युज् संयोगे युंक्ते। युज् संयमे योजयति, योजिता इति त्रयाणां धातुनामर्थान् एकीकृत्य अल् प्रत्यये कृते योगः। यस्यार्थः – समाधिः, संयोगः, संयमः च इत्येषाम् एकत्रावस्थानम्।

गीतायामुक्तम्-

**"योगः कर्मसु कौशलम्"।**

योगदर्शनस्य वैशिष्ट्यम्-

१. चित्तवृतेः निरोधः योगः।

२. योगमनोविज्ञानम्।

३. प्रमाण-विकल्प-विपर्यय-निद्रा-स्मृत्यादीनां विवरणम्।

४. सम्प्रज्ञानासम्प्रज्ञानसमाधेः अनुष्ठानम्।

५. पञ्चक्लेशानां विवरणम् यथा- अविद्या-अस्मिता-राग-द्वेष-अभिनिवेशः च।

६. योगस्याष्टाङ्गानि- यम-नीयम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधिः चेति।

७. अष्टसिद्धयः- अणिमा-महिमा-लघिमा-गरिमा-प्राप्ति-प्राकाम्य-वशित्व-ईशित्वादयः।

८. ईश्वरप्रणिधानम्।

९. कैवल्यं तथा आत्मदर्शनम्।

पतञ्जलिमतानुसारं शिक्षा एका दार्शनिकी मनोवैज्ञानिकी च प्रक्रिया। योगश्चित्तवृत्तिनिरोधः इति योगस्य परिभाषा। शिक्षा एका प्रक्रिया यया मनुष्यः स्वस्य लौकिककर्म कर्तुं समर्थः योग्यः वा भवति। शिक्षा लौकिकालौकिकज्ञानयोः श्रेष्ठं साधनमस्ति।

**शिक्षायाः उद्देश्यानि-**

१. आत्मसंयमम् ।

२. आत्मप्रशिक्षणम् ।

३. पूर्णताप्राप्तिः सर्वा ? ?गीणविकासः वा ।

४. लौकिकालौकिकभावनायाः विकासः ।

५. उपयुक्तसंस्काराणां निर्माणम् ।

६. नैतिक तथा चारित्रिकविकासः ।

**शिक्षणविधयः**

योगदर्शने अनेकाः शिक्षणविधयः वर्तन्ते। यथा-

१. प्रत्यक्षविधिः ।

२. अनुमानविधिः ।

३. आगमविधिः ।

४. उपदेशविधिः ।

५. सूत्रविधिः ।





६. तर्कविधिः ।

७. श्रवण-मनन-निदिध्यासनविधिः ।

८. स्वाध्यायविधिश्चेति।

**पाठ्यचर्या-**

योगश्चित्तवृत्तिनिरोधः इत्यनेनसूत्रेण योगः कः? चित्तं किं भवति? चित्तस्य का विशेषता? चित्तवृत्तिनिरोधनं अष्टाङ्गयोगस्य कानि साधनानि भवन्ति? इत्यादीनां प्रश्नादीनामुत्तरं पाठ्यचर्यायाः स्वरूपं निर्धारितम्। धर्मं तथा आत्मसंयमं ज्ञानं प्रदातुं योगशास्त्रस्य महती भूमिका वर्तते। अस्य कृते पाठ्यचर्यायां दर्शनशास्त्रं, धर्मशास्त्रं, नीतिशास्त्रं, मनोविज्ञानं, शरीरविज्ञानमित्यादीनां कृते स्थानं परिकल्पितम्।

**अनुशासनम्-**

अनु उपसर्गपूर्वकं शास् धातोः ल्युट् प्रत्ययेन अनुशासनशब्दस्य निष्पत्तिः। योगदर्शने प्रतिपादितः उपदेशः अनुशासनमिति कथ्यते। अनुशासनस्यार्थः नियन्त्रणम्। प्रथमसूत्रे प्रतिपादितमस्ति- अथ योगानुशासनम्। योगस्यानुशासनम् योगानुशासनम्। द्वितीयं सूत्रं - योगश्चित्तवृत्तिनिरोधः। चित्तवृत्तिनां निरोधः एव योगः। योगशिक्षायाम् आत्मानुशासनं भवति। एतदर्थं महर्षिपतञ्जलिना अष्टाङ्गयोगस्य साधनं प्रस्तुतम्। अष्टाङ्गयोगे यमः पञ्चप्रकारकाः सन्ति। यथा- अहिंसा, सत्यम्, अस्तेय, ब्रह्मचर्यम् अपरिग्रहः चेति। यथोक्तं योगसूत्रे-

**"अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः।"** साधनपादः-३०

एतानि वैयक्तिकानुशासनस्य तथा च लौकिकानुशासनस्य साधनानि भवन्ति। अष्टाङ्गयोगे पञ्चप्रकारकाणां नियमानां प्रतिपादनं भवति। यथा-"शौचसन्तोषतपस्वाध्यायेश्वरप्रणिधानानि नियमाः।"

पुनः **"स्थिरसुखामासनम्"। श्वासप्रच्छ्वासयोर्गतिविच्छेदः प्राणायामः। "स्वविषयासम्प्रोष। चित्तस्य स्वरूपानुकारइवेन्द्रियाणां प्रत्याहारः"। "देशबन्धचित्तस्य धारणा"।** "तत्र प्रत्ययैकतानता ध्यानम्"। "तदेवार्थमात्रनिर्यासं स्वरूपशून्यमिव समाधिः"। अत्र मुक्तयात्मकमनुशासनस्य प्राधान्यता वर्तते।

छात्रः- योगदर्शनानुसारं छात्रः योगी भवेत्। विद्यार्थी चित्तवृतेः निरोधं नियन्त्रणं च कुर्यात्। विद्यार्थी कायेन-मनसा-वाचा सात्विकं, शुद्धं, संस्कारयुक्तश्च भवेत् येन सः योगस्याधिकारी भवेत्।

**अध्यापकः-**

योगदर्शनानुसारम् अध्यापकः अपि योगी भवेत्। वैरागी भवेत्। प्रमाण-विकल्प-विपर्यय-निद्रा-स्मृत्यादि पञ्चवृत्तिषु अध्यापकः छात्रः चेति नियन्त्रितः भवेत्। चित्तस्य पञ्चावस्था यथा-१ क्षिप्तावस्था, २ मूढावस्था, ३ विक्षिप्तावस्था, ४ एकाग्रावस्था, ५ निरूद्धावस्था चेति ज्ञानं भवेत् अध्यापकस्य।

**विद्यालयः-**

योगस्य ज्ञानं तथा आत्मसाक्षात्कारस्य लक्ष्यं प्रवचनेन वुद्ध ?या श्रवणेन च न भवति। योगदर्शने विद्यालयः मुक्तवातावरणे तथा स्वच्छवातावरणे भवेत्। शान्तपरिवेशे भवेत्। योगाभ्यासे ज्ञानमात्मसाक्षात्कारश्च भवति। आत्मसाक्षात्कारः गुरुं विना भवितुं नार्हति। तस्मात्पूर्वं शिष्याणां कृते आवासिकशिक्षाव्यवस्था आसीत्।

**निष्कर्षः-**

शिक्षायां योगदर्शनस्य भूमिका अत्यन्तगुरुत्वपूर्णा इति मन्यते। योगदर्शनमाध्यमेन आत्मसंयमनम्, मनसः दृढीकरणम्, इन्द्रियाणां स्वायत्ते स्थापनं तथा सर्वा ? ?गीणविकासः लभ्यते। शिक्षा एका व्यवहारिकप्रक्रिया इति सर्वैः मन्यते। व्यवहारदृष्ट ?या अपि योगदर्शनं सर्वेषां कृते अत्यन्तमुपयोगी। अतः शिक्षायाः उपरि अस्य प्रभावः नूनं भविष्यति भवति च।





# वैदिककालिकीशिक्षा

लक्ष्मीप्रिया जेना
शिक्षाशास्त्री द्वितीयवर्षम्

**शिक्षा-**

प्रपञ्चेऽस्मिन् सैव श्रेष्ठा शक्तिः या खलुनरेषु ज्ञानज्योतिं ज्वालयति, अविद्यान्धतमसं व्यपोहति, दुर्गुणं वारयति, गौरवं विकासयति, मातृवत् संरक्षिका, पितृवत् सत्यपथप्रदर्शिका, कान्तावत् मनोरञ्जिका, सुखदा वरदा च भवति। विद्ययाऽमृतमश्नुते इति उपनिषदवाक्ये ज्ञायते यत् इदं ज्ञानज्योतिः प्राक्काले विद्या नाम्ना पूजितासीत्। पुराकाले पूजिता इयं विद्या सम्प्रति शिक्षा नाम्ना परिवर्त्तितास्ति।

**शिक्षायाः परिभाषा-**

या विद्या पुराकाले प्रार्थिता सा खलु सम्प्रति शिक्षा नाम्ना विद्वद्भिः प्रशंसिता वर्तते। शिक्षायाः काश्चन परिभाषाः भवन्ति। यथा-

इशोपनिषदि- सा विद्या या विमुक्तये।

कौटिल्येनोक्तम्- राष्ट्रियतायाः राष्ट्रप्रेम्णश्च प्रशिक्षणम्।

रवीन्द्रनाथेनोक्तम्- अस्माकं जीवनस्य सर्वासामपि समस्यानां समाधानार्थं विद्यमानः राजपथः एव शिक्षा।

**वैदिककालिनशिक्षा-**

वैदिककालिकशिक्षायाः स्थितिः उत्तमा आसीत्। शिक्षा यद्यपि स्वतन्त्ररूपेण आचार्यकुलाधीनस्य आसीत् तस्याः सञ्चालनं कुलपतिः आचार्यः करोति स्म, तथापि राज्यप्रशासनस्यापि इदं कर्तव्यमासीद यद् आश्रमेषु यत्र विद्यार्थीनः पठन्ति,तत्र काचिदपि क्षतिर्न स्यात्। शिक्षायाः घटकतत्त्वानि षड् भवन्ति। यथा- शिक्षकः, शिक्षार्थी, शिक्षाकेन्द्रम्, शिक्षाविषयः, मातापितरौ समाजश्च।

शिक्षायाः लक्ष्यम् उद्देश्यानि च विचारचयन्तः भारतीयः ऋषयः मुनयः च अन्तःशक्तीनां समुचितरूपेण विकासमेव प्रथमम् अन्तिमं च लक्ष्यं स्वीकृतवन्तः आसन्। एतादृशं तथ्यं स्वीकृते सति शिक्षाविषयिणीनां सर्वासामपि समस्यानां समाधानं सरलमेव जायते। वैदिकऋषयः इयमेव आदर्शं दृष्टिं निधाय स्वशक्तीनां विकासार्थं प्रयतमानाः भवन्ति।

**अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्।**
**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ।।**

अर्थात् हि अग्नेः (परमेश्वरः) भवान् विश्वेस्मिन् अस्माकं बुद्धिः सन्मार्गं प्रति नयतु न केवलं नयतु। अपितु भवान् अस्माकं हृदयेभ्यः सकलान् दुर्गुणान् सर्वास्थ पापभावनाः दूरीकरोतु, अस्मभ्यं निष्पापाः शुद्धाः पवित्राश्च बुद्धिः ददातु। वयम् एतदर्थं भूयोभूयः भवन्तं प्रार्थयामर्हः। पुनश्च वैदिकाः ऋषयः प्रार्थयन्ते-

**यां मेधां देवगणाः पितरश्चोपासते।**
**तया मामद्य मेधायाऽग्ने मेधाविनं कुरू।।**

अर्थात् हे अग्नेः देवगणाः पितरः च मेधाम् उपासते भवान् मां तादृश्या मेधया (बुद्ध ?या) युक्ति करोतु। अर्थात् बुद्धिमन्तं करोतु। वैदिककाले न केवलं बुद्धिविकासाय प्रार्थनाः विधीयते स्म। अपि तु बुद्धि पवित्रां कालुष्यरहितां च विधातुमपि प्रार्थनाः क्रियते स्म। एवं वैदिकशिक्षायाः मूलाधारः मानवबुद्धिः परिष्कारपूर्वकं सुपथनिर्दशनम् आसीत्। वस्तुतः इदमेव प्राचीनशिक्षायाः लक्ष्यमासीत्। वैदिकी शिक्षा मानवताप्रेमं वर्धयति।

यमानां नियमानां च पालनं सर्वेषां विद्यार्थीनां कृते आवश्यकमासीत्। विद्यार्थी यमान्, नियमांश्च पालनम्, स्वचरित्रस्य विकासं च कुर्वन् स्वचरित्रं महत् करोति स्म। तथा च सः जीवनम् अनुशासितं करोति स्म। फलतः तस्य व्यक्तित्वस्य विकासाय ब्रह्मचर्यपालनम् आवश्यकम् आसीत्। ब्रह्मचर्यपालनेन देवाः मनुष्याश्च इच्छानुगुणं लभन्ते स्म। वैदिकशिक्षायां चरित्रस्य सर्वाधिकं महत्वं प्रतिपादितमस्ति।

व्रतानुष्ठानरहितो मनुष्यः कदापि शिक्षां ग्रहीतुं नार्हति। विद्यार्थीनां जीवनं तपसः त्यागस्य च जीवनमस्ति। दुष्टाचरणेभ्यः विद्या सर्वदा बिभेति। कदाचित् एतादृशाः दुष्टाः जनाः यदि विद्योपार्जनं कुर्वन्त्यपि,तथापि विद्या तेषां कल्याणं न करोति। अपितु अहितमेव करोति।

विद्या पवित्रं शुद्धाचरणशीलं मेधाविनं ब्रह्मचारिणं च स्वकृपया अनुगृह्णाति। तथा च जनकपित्रापेक्षया आचार्याः अतिमहत्त्वपूर्णो भवति। यतोहि पिता केवलं जन्मदाता किन्तु आचार्यास्तु एतद् भवसागरसन्तरणाय मानवं पूर्णतया निर्मापयति। उक्तं च मनुना-

**"उत्पादकब्रह्मदाहोर्गरीयान् ब्रह्मदः पिता।**
**ब्रह्म जन्म हि विप्रस्य प्रेत्य चेह च शाश्वत् ?"**





मनु-२/१४६

योगदर्शनेषु प्रणीतेषु पञ्चक्लेशेषु अर्थात् दुःखेषु अविद्या प्राधान्येन वर्णिताऽस्ति। अविद्यैव मानवं दुःखैः पीडितं करोति। अतः दुःखेभ्यः मुक्तिप्राप्तये ज्ञानार्जनं विधेयम्। तथा चोक्तम्-

**"ऋते ज्ञानान्न मुक्तिः"**

वयं पश्यामो यद् वैदिकभारतस्य शिक्षायाः आदर्शो महान् आसीत्। वैदिकीशिक्षा मानवस्य सर्वाङ्गीणविकासाय प्रयतते स्म। तथा च भौतिकवादापेक्षया अध्यात्मवादः तल्लक्ष्यमासीत्।

शिक्षाप्रदानकार्यं ब्राह्मणस्याधीनमासीत्। ऋग्वेदस्य एकस्मिन् शिक्षकस्य कृते शाक्त इति शब्दः प्रयुक्तोऽस्ति। शिक्षकस्य कृतो आचार्यः शब्दस्य प्रयोगो ऋग्वेदे नोपलभ्यते, किन्तु अथर्ववेदे बहुधा उपलभ्यते। काठकसंहितायाम् आचार्यः ब्रह्मचारिणः प्रजापतिः उक्तोऽस्ति। वैदिककाले शिक्षार्थीनः सामान्यम् अभिधानं ब्रह्मचारी आसीत्। ऋग्वेदे ब्रह्मचारी पदम् एकधा प्रयुज्यते। एकस्मिन् मन्त्रे उक्तमस्ति यद् ब्रह्मचारी विद्या अध्ययनार्थं सर्वत्र ब्रह्मज्ञानिनां समक्षं गत्वा देवानाम् अङ्गं सम्पाद्यते। अथर्ववेदस्य ब्रह्मचर्यासूक्ते (११.५) ब्रह्मचारिणः महत्वविषये। तस्य च धार्मिकसामाजिकप्रतिष्ठायां उल्लेखो विहितोऽस्ति। ऋग्वेदे शिक्षार्थीनः कृते शिक्षमाणशब्दः प्रयुक्तोऽस्ति। छान्दोग्योपनिषदि द्विविधब्रह्मचारिणामुल्लेखः उपलभ्यते। एको ब्रह्मचारी आचार्यकुले एव उषित्वा सम्पूर्णं नवीनं प्रापयति स्म। तदा ब्रह्मचारिणः नित्यकर्माणि भवन्ति स्म-अरण्यं प्रतिदिनं गत्वा समिधाहरणम्, भिक्षाटनम्, गुरोराज्ञापालनं च। ब्रह्मचारी समीपं भूत्वेव आचार्यस्य सम्मुखं गच्छति स्म। आचार्यस्याज्ञापालनम्, आचार्येदेवादेशनैव किमपि कार्यकरणं स्वेच्छया किमपि न करणम्। इदम् आचार्यं स्वात्मनि धारणम् आसीत्। तदा नित्यं समिधाः आहृत्य अग्निहोत्रं च करणं ब्रह्मचारिणि मृत्योः प्रवेशः स्वीक्रियते। सप्तरात्रि यावत् अनवरतं समिधाहरणम् अग्निहोत्रं च यो न करोति तस्य ब्रह्मचारित्वं विनस्यति। तस्य च पुनः उपनयनसंस्कारकरणस्य विधानमासीत्। वैदिकशिक्षायाः स्वस्थं स्वरूपम् आचार्यशिष्ययोः सम्बन्धाधारितमासीत्। आचार्यः शिष्यश्च प्रतिदिनं पाठारम्भात् पूर्वं परमेश्वरं प्रार्थयते स्म-

**"ॐ सह नाववतु। सह नौ भूनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै" ?**

शिक्षाप्रदानकानि केन्द्राणि आश्रमनाम्ना उच्यन्ते स्म। एते आश्रमा एव गुरुकुलनाम्ना आचार्यकुलनाम्ना वा प्रसिद्धाः आसन्। एते आश्रमाः नगरात् अतिदूरे अरण्ये प्रकृतेर्मुक्ते अङ्के स्थिताः भवन्ति स्म। आश्रमस्य प्रतिष्ठातुः ऋषेः आचार्यस्य वा निवासोऽत्रैव भवति स्म। आश्रमे प्रवेशकाले

शिष्याणां उपनयनसंस्करो विधीयतेस्म। उपनयनसंस्कारं विना कोऽपि शिष्यः शिक्षां ग्रहीतुं न शक्नोतिस्म। तदा उपनयनसंस्कारानन्तरं शिष्यस्य द्वितीयजन्म मन्यते स्म। इयं मान्यता आसीत् यत् शिष्यस्योपनयनं कुर्वन् आचार्यः ब्रह्मचारिणं गर्भे धारयति, त्रिरात्रिपर्यन्तमुदरे स्थापयति। ततस्तस्मै सावित्रीमुपदिशति, वैदिककाले सामान्यतया पञ्चविंशतिवर्षाणि यावत् शिष्याः गुरुकुले उषित्वा द्वादशवर्षाणि एकैकस्य वेदस्य, आहत्याष्टचत्वारिंशत् वर्षाणि यावदपि चतुर्णां वेदानाम् अध्ययनं कुर्वन्तिस्म।

आश्रमस्य शिक्षा समाप्तेरनन्तरं ब्रह्मचारिणः स्नानं कार्यते स्म। तदनन्तरं सः स्नातक इत्युच्यतेस्म। स्नातकः शिष्यः भिक्षाटनं कर्तुं नार्हतिस्म। इदं स्नानमेव समावर्तनसंस्कारो भवति। इदं स्नानं ब्रह्मचर्यजीवनस्य समाप्तद्योतकमासीत्। अस्मिनवसरे आचार्यः शिष्यानुपदिषतिस्म-

"सत्यंवद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्यस्य प्रियं प्रजानन्तु मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम् ।कुशलान्न प्रमदितव्यम्। भृत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथि देवो भव। यान्यनवद्यानि कमार्णि तानि सेवितव्यानि नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि। ये के चाऽस्मच्छ्रेयांसो ब्राह्मणाः तेषां त्वयाऽऽसनेन प्रस्वसितव्यम्। श्रद्धया देयम्। अश्रद्धयादेयम्। श्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा वृत्तिविचिकित्सा वा स्यात्। ते तत्र ब्राह्मणाः संमर्सिनः युक्ता अयुक्ताः अलुक्षाः धर्मकामाः स्युः। यथा ते तेषु वर्तेरन् तथा तत्र वर्तेथाः। एष आदेशः। एष उपदेशः। एतदनुशासनम्। एवमुपासितव्यम्"।

तैत्तरीयोपनिषद्- १/११/१-१४

एतत् भवति वैदिककालिक अथवा वेदकालीकशिक्षापद्धतिः।







# संस्कृतभाषा राष्ट्रभाषा स्यात्

सुनीता सेठ्

शिक्षाशास्त्रिद्वितीयवर्षम्

भाष्यते व्यवहारादिषु प्रयुज्यते इति भाषा। ध्वन्यात्मकशब्दैः विचाराणां प्रकटीकरणम् एव भाषा। मानवसभ्यतायाः संस्कृतेः च विकासे भाषायाः स्थानं महत्त्वपूर्णं वर्तते। कस्यापि जनस्य बौद्धिक-मानसिक-सामाजिक-राजनैतिकविकासः तस्य भाषायाः साहित्यस्य च उपरि आश्रितः भवति। मानवव्यक्तित्वस्य विकासे भाषा प्रधानसहायिका भवति। भाषायाः विविधानि रूपाणि सन्ति। यथा- मातृभाषा, आञ्चलिकभाषा, जातीयभाषा, अन्तःराष्ट्रियभाषा, संस्कृतभाषा इत्यादयः। एतासु भाषासु संस्कृतभाषा अन्यतमा।

संस्कृतम् इति शब्दः सम् उपसर्गपूर्वकं कृञ् धातोः क्तप्रत्यये सति सुडागमे निष्पन्नः। सम्यक् कृतं संस्कृतम्। संस्कृतानां भाषा संस्कृतम्।

## प्राचीनभारते संस्कृतम्

प्राचीनभारतं सर्वथा समृद्धम् आसीत्। बालकस्य जन्मादारभ्य क्रियमाणाः जातकर्म-नामकरण-अन्नप्राशनादिसंस्काराः संस्कृतभाषयाः एव क्रियन्ते। पूजापाठः यज्ञयागादिक्रियाश्च अस्यां भाषायामेव प्रचलति। अस्माकं देशस्य विशिष्टपुरुषाणां कार्याणि, अचारः, वेशभूषाः, यथा-तिलकधारणम् अस्माकं संस्कृते अन्तर्भवति। संस्कृतभाषा एव संस्कृति आश्रिता भवति। यथोक्तं कपोलेन-

**संस्कृतं संस्कृतेर्मूलं ज्ञानं विज्ञानवारिधिः।**

वेदतत्त्वार्थसजुष्टं लोकालोककरं शिवम ्संस्कृतवाङ्मये संस्कृतरूपकेषु विविधपात्रैः कृतः देवभाषायाः व्यवहारः अपि संस्कृतभाषायाः व्याकत्वं प्रतिपादयति। रामायणकाले भगवतो रामचन्द्रस्य सेवको हनुमान् यदा कनकमयो मुद्रामादाय सीतायै दद्यो तदा स विचारयति स्म यत्- सीतायै संदेशः कां भाषामाश्रित्य दद्यामिति। तद्यथा रामायणे-

**यदि वाचं वदिष्यामि द्विजातिरिव संस्कृतम्।**
**रावणं मन्यमाना मां सीता भीता भविष्यति ।।**

अनेन सुतरां सिद्ध ?यति यत् वेदवेदाङ्गपारगः रावणः संस्कृतज्ञः संस्कृतवाङ्-मुखरोऽपि आसीत्। पुराकाले साधारणमनुष्याः संस्कृतभाषणं कुर्वन्ति स्म। तदानीं काष्ठं बहन्तं कमपि काष्ठोपजीविनं अपृच्छत्-

"किं त्वां भारो बाधति ?"

इति श्रुत्वा तेन काष्ठोपजीविना उक्तम्-

भारो न बाधते राजन्

यथा वाधति बाधते।

अनेन प्रमाणितं यत् पुरा भारते देशे प्राकृताः जनाः अपि संस्कृतभाषाविदः आसन्।

आधुनिकभारते संस्कृतम्-

भारतस्य स्वातन्त्र्योत्तरं देशनेतृभिः राष्ट्रस्योन्नतौ संस्कृतमहत्वमङ्गीकृतम्। अतो भारतीयविद्यालयेषु महाविद्यालयेषु विश्वविद्यालयेषु च संस्कृताध्ययनव्यवस्था विहिता। भारतसर्वकारेण देशे संस्कृतोत्थानमभिप्रेत्य " राष्ट्रियसंस्कृतसंस्थानम्" इति संस्थापितम्। भारतस्य विविधेषु प्रान्तेषु अनेके विश्वविद्यालयाः विनिर्मिताः। सर्वेषामपि संस्कृतविश्वविद्यालयानां शास्त्री-आचार्यादयः उपाधयः अन्येषां विश्वविद्यालयानां "बी.ए.", "एम्.ए." प्रभृतिभिः उपाधिभिः समकक्षतां धारयन्ति। संस्कृतोपाधिधारिणो विविधक्षेत्रेषु विविधासु सेवासु समानावसरान् लभन्ते।आकाशवाणीतः "संप्रतिवार्ताः श्रूयन्ताम्" इति कृत्वा प्रतिदिनं संस्कृतभाषायां समाचारः प्रसार्यते। दूरदर्शनपक्षतः अपि संस्कृतवार्ताः प्रसार्यन्ते। संस्कृतशिक्षणाय आकाशवाण्याः देववाणीपाठयोजनापि प्रचलिता।

संस्कृतभाषा प्राचीनापि नवीना। अद्याप्यस्यां साहित्यं सृज्यते। इदमेव अस्या सजीवतायाः, बलवत्तायाः, समृद्धतायाः प्रत्यक्षं प्रमाणम्। वर्तमानकाले देवभाषायां बहूनि काव्यानि नाटकानि देवभाषायां प्रकाशिताः, काश्चन मासिकाः, त्रैमासिकाः, षाण्मासिकाः, वार्षिकाः, पाक्षिकाः, इतराश्च साप्ताहिकाः पत्रपत्रिकाः संस्कृतस्य व्यावहारिकतां, लोकप्रियताः एवञ्च प्रक्षेपयन्ति।





आधुनिकयुगे संस्कृतसम्मेलनानि संगोष्ठ्यः च समायोज्यन्ते। विशिष्टकविसम्मेलनानि अपि क्रियन्ते। अद्य संस्कृतं विश्वरङ्गमञ्चेऽपि सततं विराजते। इटली-फ्रान्स-जर्मनी-आमेरिकादिषु देशेषु संपन्नानि विश्वसंस्कृतसम्मेलनानि अस्य प्रत्यक्षप्रमाणानि। भारतवर्षे तु सर्वकारनिर्देशमनुसृत्य सर्वास्वपि शिक्षणसंस्थासु रक्षावन्धनपर्वणि संस्कृतदिवसः समायोज्यते। वैज्ञानिकेऽस्मिन् युगे संस्कृतस्य महती उपयोगिता वर्तते। संस्कृतसाहित्यं खलु मानवजीवनोपयोगि शिक्षाभिरमृतमयैरूपदेशैश्च परिप्लुतम्।

राष्ट्रियभाषात्वेनसंस्कृतम्-

अस्मिन् स्वतन्त्रभारते बह्यः समस्याः सन्ति। विविधसमस्यानां मध्ये एकताविधायिन्यः भाषायाः आवश्यकता अधुना अनुभूयते। परं बहुवादविवादानन्तरम् एव समीचीनं प्रतिभाति यत् हिन्दी-संस्कृतं च विहाय नास्ति काचिदन्या भाषा या भारतस्य राष्ट्रभाषात्वप्राप्तये योग्या भवेत्। यतोहि अन्याः याः भाषाः सन्ति ताः सर्वाः अपूर्णाः एकदेशीयाः अल्पभाषीयाः च सन्ति।

संस्कृतभाषा एव राष्ट्रभाषा भवितुं योग्या। यतोहि तस्याः भाषायाः साहित्यं विशालं व्यापकं तथा या संस्कृता परिमार्जिता, नानालङ्कारविभूषिता, सरला, रम्याऽभिरामा च स्यात्, सा एव राष्ट्रभाषा भवितुमर्हति। उपर्युक्तैः एभिः गुणैः संस्कृतभाषा एव अलङ्कृता वर्तते।

## संस्कृतभाषायाः महत्त्वम्

**अनुसया सेठी**
शिक्षाशास्त्री द्वितीयवर्षम्

भाष्यते व्यवहारेषु प्रयुज्यते इति भाषा। भाषा व्यक्तायां वाचि धातोः निष्पन्नः अयं शब्दः। भाषायाः अभिप्रायः प्रकरणम् अथवा भाषयति या सा भाषा। लोके बहवः भाषा भवन्ति। यासु संस्कृतभाषा अति प्राचीना समृद्धा च। संस्कृतभाषायां चत्वारो वेदाः, वेदा ? ?गानि, चतुर्दशविद्या, विज्ञानम्, आयुर्वेदादि ग्रन्थाश्च सन्ति। अर्थात् एवं स्पष्टं ज्ञायते यत् अनादि कालादेव समाजेऽस्मिन् संस्कृतभाषायाः स्थानम् अद्वैतम् अवर्णनीयम् च वर्तते। अतः अतिसूक्ष्मभावनां स्पष्टीकरणविषये संस्कृतं विना नैव समर्थो भवितुमर्हति।

संस्कृतभाषायाः अनेकानि महत्त्वानि सन्ति। यथा-संस्कृतभाषायाः वैज्ञानिकमहत्त्वम्, संस्कृतस्य सांस्कृतिकमहत्त्वम्, संस्कृतस्य ऐतिहिसिकमहत्त्वम्, संस्कृतस्य सामाजिकमहत्त्वमित्येतेषु विद्यमानेषु महत्त्वेषु केवलं संस्कृतस्य सांस्कृतिकमहत्त्वविषये विचार्यते। संस्कृतभाषा विश्वे तथा भारतवर्षे प्रचलति बहुभाषाणां या एकः वलिष्ठः उत्सः। तत्समः च तद्भवशब्दराशेः बहुलप्रयोगः तथा बहुविधविकारः संस्कृतं विश्वभाषाया मर्यादा भवति।

**(क)संस्कृतभाषा सर्वप्राचीनतमा भाषा-**

वेदादारभ्य चतुर्दशशास्त्राणि ब्रह्मणि विरचितानि एतानि शास्त्राणि संस्कृतभाषया एव रचितानि। अतः ज्ञायते अनादिकालादेव संस्कृतभाषा प्राचीनभाषा।

**(ख)संस्कृतभाषा सर्वासां भाषाणां जननी-**

कथनस्य अभिप्रायः एवमस्ति सर्वाः भाषाः संस्कृतभाषातः निष्पन्नाः भवन्ति। आङ्ग्लभाषया माता Mother इति कथ्यते। उत्कलभाषया मा इति कथ्यते। हिन्दीभाषया मा इत्युच्यते। अतः ज्ञायते यत् सर्वासां भाषाणां जननी भवति संस्कृतभाषा ।

**(ग)संस्कृतभाषा देवभाषा इत्युच्यते**

देवभाषा इति देवानां भाषा। देवत्वं सम्पादयित्रीयभाषा। उत्तरपदलोपकर्मधारयः इति द्विधा विग्रहं कर्तुं शक्यते। पूजा,कर्मकाण्डयज्ञादिकमार्णि संस्कृतभाषया एवविधीयन्ते।

**(घ)संस्कृतभाषायां सर्वे मानवीयसंस्काराः सन्निहिताः सन्ति-**

संस्कृतभाषायां वसुधैवकुटुम्बकभावनासम्बन्धाः श्लोकाः बहवः सन्ति। संस्कृतभाषां विना विश्वे इतरभाषासु कुत्रापि ईदृशी लोकोत्तरभावना न परिदृश्यते। संस्कृतभाषायाः विश्वबन्धुत्वभावना वर्त्तते। समाजे विश्वे यानि भूतानि सन्ति तानि आत्मवत् भावयन्तु विश्वे अथवा ब्रह्माण्डे ये प्राणिनः सन्ति ते सुखिनः भवन्तु । तदुक्तम्-

**अयं निजः परोवेति गणना लधुचेतसाम्।**
**उदारचरितानां तु वसुधैव कुटुम्बकम् ।।**

**(ङ)संस्कृतभाषायां ज्ञानानि, कलाः,कौशलानि, दार्शनिकरहस्यानि, तत्त्वानिअन्तर्निबद्धानि सन्ति-**

**संस्कृते संस्कृतिर्ज्ञेया संस्कृते सकलाः कलाः।**
**संस्कृते सकलं ज्ञानं संस्कृते किं न विद्यते ।।**





संस्कृतं भारतीयसंस्कृतेः आत्मा। संस्कृतभाषामाध्यमेन भारतीयसंस्कृतिः सुप्रतिष्ठिता अस्ति। जन्मन आरभ्य मृत्युपर्यन्तं ये षोडशसंस्काराः वर्तन्ते ते संस्कृतेनैव क्रियन्ते।

**(च)सम्प्रति संस्कृतभाषा त्रिधा विभक्ता । तद्यथा-**

वैदिकसंस्कृतभाषावेदशास्त्रेषु, उपनिषत्सु, या भाषा वर्तते सैव वैदिकसंस्कृतभाषा।

लौकिकसंस्कृतभाषा-लोके प्रयोगे या संस्कृतभाषा वर्तते सैव लौकिकसंस्कृतभाषा।

आधुनिकसंस्कृतभाषाआधुनिककाले या संस्कृतभाषा प्रचलति सैवाधुनिकसंस्कृतभाषा।

**(छ)अस्याः भाषायाः संस्कृतमिति नामकरणे व्याकरणशास्त्रस्य योगदानं महत्त्वपूर्णम्-**

सम् उपसर्गपूर्वकान्डुकृञ् धातोः क्तप्रत्यये कृते सति संस्कृतम् अर्थात् प्रकृति प्रत्ययपुरस्सरं कृतमिति अस्याः भाषायाः कृते नामैतत् सार्थकं भवति।

**(ज)व्याकरणानामुत्पत्तिजनकं शास्त्रम्-**

व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेनेति व्याकरणम्। शब्दानां व्युत्पत्तिनिरूपणाय अर्थनिरूपणाय तथा च साधुशब्दप्रतिपादनाय व्याकरणशास्त्रस्य महत्त्वं सार्वकालिकम्।

(झ) व्याकरणशास्त्रस्य योगदानं विना या भाषा व्यवह्रियते सा अभाषा, असाधुभाषा अथवा असंस्कृतभाषा इति उच्यते।व्याकरणे संस्कृतभाषायाः ध्वनिः छन्दः च शब्दभण्डारः अन्वयः।

(ञ) संस्कृतभाषा सर्वप्राचीनतमा भाषा वर्तते। एतस्य प्रमाणं भारतीयसंस्कृतितः ज्ञायते।

**वैदिकसंस्कृतिः-**

वैदिककाले ब्रह्मचारिणः चतुर्दशः वयः पर्यन्तं शिक्षाग्रहणं कुर्वन्ति स्म । गुरवः च आश्रमेषु तिष्ठन्तः शिष्यान् तत्रैव अध्यापयन्ति स्म। गुरूशिष्ययोः सम्बन्धः पितापुत्रवदासीत् एवं तेऽपि संस्कृतभाषया व्यवहरन्ति। संस्कृतम् अमृतमिव प्रतिभाति। अतः कथ्यते-

**अमृतं संस्कृतं मित्र सरसं सरलं पयः।**
**भाषासु महनीयं यद् ज्ञानविज्ञानपोषकम् ।।**

# संस्कृतशिक्षणे क्रियात्मकानुसन्धानम्

**इतुस्मिता विधारः**
शिक्षाशास्त्रिद्वितीयवर्षम्

क्रियात्मकानुसन्धानस्य तात्पर्यम् एतादृक् वैज्ञानिकान्वेषणेन भवति, यस्यसम्बन्धःशिक्षायाः क्रियात्मकपक्षैः सह भवति। अस्मिन् विद्यार्थिनामध्यापकानां शिक्षाधिकारिणां च कार्येपुसमुत्पन्नविभिन्नसमस्यानां समाधानं वैज्ञानिकविधिना क्रियते।

अत्र अनुसन्धानकर्ता स्वसमस्यायाः समाधानार्थं प्रथमतः समस्यायाः कारणानां परिशीलनं करोति। ततः क्रियात्मकप्राक्कल्पनायाः निर्माणं कृत्वा समुचितस्य अनुसन्धानाभिकल्पस्य प्रारूपं विकासस्य प्राप्तपरिणामानां मूल्या ? ?कनं निष्कर्षप्रतिपादनं च करोति।

निष्कर्षतः क्रियात्मकानुसन्धानं शैक्षिकानुसन्धानस्य व्यावहारिकपक्षतः वर्तते। शिक्षायाः व्यावहारिककाठिन्यानां व्यक्तिगतसमस्यानां च निवारणार्थं वैज्ञानिकप्रयासः विधीयते।

क्रियात्मकानुसन्धानस्य विकासक्रमः–

क्रियात्मकानुसन्धानस्य सर्वप्रथमोल्लेखः वकिंघममहोदयेन "Research for Teachers" इत्यस्मिन् पुस्तके १९२६ तमे वर्षे कृतम्। परन्तु, शिक्षासम्वद्धसमस्यानां समाधानार्थं क्रियात्मकानुसन्धानस्य सर्वप्रथमप्रयोगः स्टीफन्. एम्. मोरेमहोदयः अकरोत्।

स्टीफन्. एम्. मोरे.– क्रियात्मकानुसन्धानं समस्यानाम् अध्ययनस्य वैज्ञानिकप्रक्रिया वर्तते। यस्य प्रयोगः अभ्यासकर्ता स्वप्रचलितप्रयोगेषु परिष्कारार्थं करोति।

**क्रियात्मकानुसन्धानस्योद्देश्यानि–**

१. वैज्ञानिकदृष्टिकोणस्य विकासः– शिक्षासंस्थासु कार्यरताध्यापकेषु, प्रधानाचार्येषु, निरीक्षकेषु प्रवन्धकेषु च कक्षाकक्षस्य विद्यालयसमस्याः प्रति वैज्ञानिकदृष्टिकोणस्य विकासः।

२. शैक्षिकसमस्यानां समाधानम्– पाठ्यक्रम–पाठ्यपुस्तक–शिक्षणविधि–परीक्षाप्रणाली–अनुशासन–पाठ्यसहगामीक्रिया–उपस्थिति–पृष्ठवर्तित्व–अपराधप्रवृत्तीत्यादिभिः सम्वन्धितसमस्यानां समाधाने सहायताप्रदानम्।

३. विद्यालयीयपरिस्थितीनां परिष्कारः– प्रशासकेषु योग्यतायाः वोधस्य च विकासः, येन विद्यालयीयस्थितीनां परिष्कारः भवेत्।





४. व्यावसायिकयोग्यतायां परिष्कारः– अध्यापकानां व्यावसायिकपरिष्कारदिशि अग्रेसरणम्।

५. कार्यकर्त ?णां कौशलविकासः– अभ्यासकर्तृषु अध्यापकेषु प्रशासकेषु च श्रेष्ठकौशलस्य विकासः।

**क्रियात्मकानुसन्धानस्य क्षेत्राणि–**

१. शिक्षणम्, शिक्षणव्यूहाः, विधयः, प्रविधयः, सहायकसाधनानि च।

२. विद्यार्थीनां रुचिः, अभिवृत्तिः, मूल्यानि च।

३. गृहकार्यप्रणाली, निरीक्षणप्रक्रिया च।

४. शिक्षक-शिक्षार्थीसम्बन्धः, अध्यापक- प्राचार्यसम्बन्धः।

५. संघटनात्मकवातावरणम् विद्यालयक्रियाकलापश्च।

६. परीक्षायाम् अनुकरणप्रवृत्तिः।

७. विद्यालयेषु असमायोजनसमस्या।

८. अपराधप्रवृत्तिः, मन्दाधिगमः, पाठ्यसहगामीक्रियाः।

**क्रियात्मकानुसन्धानस्य सोपानानि–**

१. समस्याचयनम्।

२. समस्यायाः कारणानां विश्लेषणम्।

३. क्रियात्मकप्राक्कल्पनायाः निर्माणम् ।

४. अनुसन्धानाभिकल्पस्य निर्माणम्।

५. प्रदत्तानां संकलनं विश्लेषणं च।

६. सामान्यीकरणं निष्कर्षप्रतिपादनञ्च।

**महत्त्वम्–**

१. क्रियात्मकानुसन्धानं परिस्थितिगतः शोधः वर्तते,यतोहि अस्मिन् समस्यायाः निदानसमाधानयोः प्रयासः विधीयते।

२. अस्मिन् समस्यायाः चयनं यथार्थस्य अतीव मूर्त्तस्तरे भवति, अतः स्वरूपं स्पष्टं मूर्त्तञ्च भवति ।

३. अत्र प्राक्कल्पना प्रस्तावितसमस्यायाः कारणानां विश्लेषणस्य आधारेण निर्णीयते।

४. एतत् सहभागिताऽऽधारितम् अनुसन्धानं भवति।

५. एतत् आत्ममूल्याङ्कनसम्बन्धं कार्यं भवति, अतः अनेन व्यावसायिकदक्षता वर्धते।

**क्रियात्मक-मौलिकानुसन्धानयोः भेदः-**

| क्रमसंख्या | विषयाः | क्रियात्मकानुसन्धानम् | मौलिकानुसन्धानम् |
|---|---|---|---|
| १ | उद्देश्यम् | विद्यालयीय कक्षाशिक्षणस्य क्रियासु परिष्करणम्। | नवीनतथ्यानां सत्यानां च अन्वेषणमपि च नूतनसिद्धान्तानां प्रतिपादनम्। |
| २ | अनुसन्धानकर्ता | विद्यालयसम्बन्धितेन केनापि कर्मचारिणा कर्तुं शक्यते। | विद्यालयात् वहिः स्थितस्य जनस्य कृते प्रयुक्तं भवति। |
| ३ | समस्यायाः स्वरूपम् | संकुचितसमस्या। कक्षाविषयं विद्यालयं यावत् या समस्या सीमिता। | समस्यायाः क्षेत्रं विस्तृतम्। मौलिकं सैद्धान्तिकं च भवति। |
| ४ | परिकल्पना | परिकल्पनानां प्रतिपादनं कारणानां विश्लेषणस्योपरि आधारितः एकस्मिन् समये एकस्याः परिकल्पनायाः सत्यापनं भवति। | परिकल्पनानां प्रतिपादनं पूर्वशोधकार्यस्य निष्कर्षः सिद्धान्तानुभवानामुपरि आधारितम्। एकस्मिन् काले सर्वासां परिकल्पनानां सत्यापनम्। |
| ५ | उपकरणम् | अस्यां निरीक्षणविधिः अनुसन्धान-उपकरणरूपेण प्रयुज्यते। | अत्र विश्वसनीयवैधादीनां प्रामाणिक-परीक्षणानां प्रयोगः क्रियते। |
| ६ | प्रारूपम् | क्रियात्मकानुसन्धाने रूपरेखायाः सरलतया परिवर्तनमानेतुं शक्यते। | अस्य रूपरेखानिर्माणे अनुसन्धाता नूनमेव विशेषप्रशिक्षणे प्रशिक्षितं भवेत्। |
| ७ | प्रदत्तानां | सरलसांख्यिक्याः प्रयोगः क्रियते। विश्लेषणम् निरीक्षणस्य आधारेणापि निर्णयं क्रियते। | उच्चसांख्यिकीप्रविधीनां प्रयोगं कृत्वा व्याख्या क्रियते। |





| क्रमसंख्या | विषयाः | क्रियात्मकानुसन्धानम् | मौलिकानुसन्धानम् |
|---|---|---|---|
| ८ | सामान्यीकरणम् | समस्यायाः समाधानमेव निष्कर्षरूपेण स्वीक्रियते। | नवीनतथ्य-सत्य-सिद्धान्तानाम् आधारेण सामान्यीकरणं क्रियते। |
| ९ | मूल्याङ्कनम् | समस्यायाः समाधाने कियती सफलता प्राप्तमिति एतत् शिक्षकेण निर्णीयते। | अस्मिन् वाह्यमूल्याङ्कनं जायते। अस्मै कार्याय विशेषणं नियुज्यते। |
| १० | कार्यक्षेत्रम् | अस्य कार्यक्षेत्रमत्यन्तं संकुचितम्। अस्मिन् विद्यालयीयकक्षायाः समस्यानां च अध्ययनं क्रियते। | अस्य कार्यक्षेत्रम् अत्यन्तं व्यापकमस्ति। |
| ११ | अर्थव्यवस्था | शिक्षकेण स्वयमर्थव्यवस्था क्रियते। प्रसारसेवा विभागेन सहायता क्रियते। | शिक्षकेण अर्थव्यवस्था क्रियते। पुनः NCERT तथा UGC धनव्यवस्था क्रियते। |
| १२ | प्रशिक्षणम् | सीमितप्रशिक्षणम् अपेक्षते। | शोधकर्ता विशेषरूपेण प्रशिक्षितं भवति। येन सः शोधप्रविधि-परीक्षणादीनां प्रयोगं कर्तुं शक्नोति। |
| १३ | महत्त्वम् | अनेन विद्यालयेषु कक्षाशिक्षणेषु च परिष्कारः सम्भाव्यते। | अनेन शिक्षायाः समस्यानाम् अध्ययनं क्रियते। शोधकर्तुः शिक्षासमस्यानां अन्तर्दृष्टेः विकासः भवेत् |
| १४ | निष्कर्षः | क्रियात्मकानुसन्धानं मौलिकानुसन्धानात् विकसितः अस्ति। | मौलिकानुसन्धानं पराम्परागतमस्ति। |

**क्रियात्मकानुसन्धानस्य योजना**

**सामान्यपरिचयः-**

❖ विद्यालयस्य नाम- भोलानाथविद्यापीठम्, पुरी

❖ कक्षा- अष्टमी

❖ समस्या- आसन्दिकायाः अभावः

❖ अनुसन्धात्री- इतुस्मिता विधारः

(क) समस्या-

समस्या एकं प्रश्नवाचककथनं भवति। अस्याः निराकरणम् अनुसन्धानेन भवति। अत्र समस्या अस्ति यत्-

कक्षायाम् आसन्दिकायाः अभावकारणेन अधिगमः वाधितः भवति।

**(ख) परिकल्पना-**

समस्यायाः कल्पितसमाधानं परिकल्पना इति। अत्र कल्पितसमाधानानि यथा-

१. आसन्दिकानां संख्यावृद्धिः

२. छात्राणां वर्गीकरणम्

३. बृहत् प्रकोष्ठे स्थानान्तरणम्

**(ग) अनुसन्धानस्य प्रारूपनिर्माणम्**

१. तथ्यानां ग्रहणम्-

**छात्रसंख्या ६८**

| | छात्रसंख्या | सपक्षः | विपक्षः |
|---|---|---|---|
| बालकाः | ३३ | २५ | ८ |
| बालिकाः | ३५ | ३३ | २ |
| समुदायः | ६८ | ५८ | १० |

**२. दत्तांशविश्लेषणम्-**

भोलानाथविद्यापीठस्य अष्टमीकक्षायां ६८ छात्राः सन्ति। तत्र आसन्दिकायाः अभावकारणात् अधिगमः वाधितः भवति। अतः आसन्दिकायाः संख्यापरिवर्धनार्थ

❖ सपक्षच्छात्राः =५८÷ ६८ × १००= ८५.२९%

❖ विपक्षच्छत्राः =१० ÷ ६८ × १००=१४.७०%





अतः एव संख्याधिकच्छात्राः नूतनाः आसन्दिकार्थं सपक्षे कथयन्ति।

**(घ) निष्कर्षः-**

छात्राणामुपवेशनार्थम् अधिकपरिमाणस्य आसन्दिकायाः आयोजनं स्यात्।

**(ङ) निष्कर्षस्यानुप्रयोगः-**

कक्षायां संख्याधिकाः आसन्दिकाः स्युः। ततः छात्राः सुष्ठुतया अध्ययनं करिष्यन्ति।

गुणाः-

१. क्रियात्मकानुसन्धानं सैद्धान्तिकानुसन्धानवत् भूत्वा व्यावहारिकानुसन्धानरूपेण भवति।

२. एतत् विद्यालयीयसमस्यायाः समाधानार्थम् एकः प्रयासः भवति।

३. एतत् शिक्षकस्य व्यवहारे तथा शिक्षणप्रक्रियायां परिवर्तनकारणात् प्रागेव तस्य विचारेषु परिवर्तनमानयति।

४. एतत् विद्यालयस्य वास्तविकसमस्यानामर्थपूरणार्थं तथा वास्तविकसमाधानं प्रस्तूय विद्यालयस्य उन्नतेः प्रेरकः भवति।

दोषाः -

१. अत्र वास्तविकसमाधानं कर्तुं न शक्यते।

२. अनुसन्धाता विद्यालयस्य समस्याभिः सह घनिष्ठतया सम्वन्धितः भूत्वा समाधाने स्वस्य प्रयोगे वस्तुनिष्ठतामानेतुं न शक्यते।

३. अस्य सीमा एकविशेषविद्यालयस्य विशेषपरिस्थितौ निर्दिष्टसमस्यायां सीमिता। अतः अन्य विद्यालयस्योपरि अस्य पूर्णरूपेण प्रयोगः न सम्भवति।

# स्वभावः परमो गुणः

कुमुदिनीमाझी
शिक्षाशास्त्रद्वितीयवर्षम्

अस्मिन् नश्वरे संसारे भगवतः अनुग्रहं विना कोऽपि किमपि कर्तुं न शक्नोति। कथ्यते-

**सुखस्य दुःखस्य न कोऽपि दाता**
**परो ददतीति कुबुद्धिरेषा।**
**अहं करोमीति वृथाभिमानः**
**स्वकर्ममूलैः ग्रथितो हि लोकः।।**

सत्स्वभावसंपन्नः सुनरः एव भगवतः अनुकम्पां लभते। दुःशीलः जनः बहुगुणालंकृतोऽपि भगवदनुकम्पायाः भाजनं न भवति। ये नराः संसारे उन्नतां पदवीमलंकृत्य पूजनीयाः भवन्ति तेषां सत्स्वभावः एव परमं कारणम्। सत्स्वभावेनैव ते सकलप्रेमभाजः सन्तः असाध्यमपि साधयितुं शक्नुवन्ति। उक्तं च-

**स्वभावं न जहात्येव साधुरापद्गतोऽपि सन्।**
**कर्पुरः पावकस्पृष्टः सौरभं लभतेतराम्।।**

नरः स्वभावेनैव देववत् आद्रियते। पिशाचवत् अवजायते। जगति एवं कोऽपि गुणाः न सन्ति, ये तावत् स्वभावगुणम् अभिभवितुमर्हन्ति। अतः अतीत्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्तते इति मनीषिणा कथितं सत्यमेव।





# ଜୀବନର ଗୀତ

ଜୀବନ ତ ନୁହେଁ ଫରଦେକାଗଜ
ଲେଖିଦେଲେ ଚିରି ଯବ ।
ଜୀବନତ ନୁହେଁ ବାଲିଘର ଖେଳ
ଉଜୁଡିଲେ ତୋଳି ହେବ ।।

ଜୀବନ ତ ନୁହେଁ ମାଟିର କଣ୍ଢେଇ
ଭାଙ୍ଗିଦେଲେ ଗଢି ହେବ ।
ଜୀବନ ତ ନୁହେଁ ଫଗୁଣର ଫୁଲ
ସବୁଦିନେ ମହକିବ ।।

ଜୀବନ ତ ନୁହେଁ କଳ୍ପନା ରଇଜ
ବାସ୍ତବରୁ ଦୂରେ ଥିବ ।
ଜୀବନ ତ ନୁହେଁ ଇନ୍ଦ୍ରର ଭୁବନ
ସବୁକିଛି ପାଖେ ଥିବ ।।

ଜୀବନ ତ ନୁହେଁ ଶରତର ଜହ୍ନ
ନୀଳଛାତି ଖୋଜୁଥିବ ।
ଜୀବନ ତ ଏକ ପ୍ରଦୀପର ଶିଖା
ଜଳି ଜଳି ଲିଭିଯିବ ।।

ଶୁଭଶ୍ରୀ ରାଉତ
ଶିକ୍ଷାଶାସ୍ତ୍ରୀ ଦ୍ୱିତୀୟ ବର୍ଷ

# ସ୍ୱଚ୍ଛ ଭାରତ

ମଣିଷ କର୍ମ କର୍ମ ବୋଲି ଦୂଷିତ କରଇ ପରିବେଶ
ସଫା ନ କରି ଆବର୍ଜନା ଟଳଇ ସୁଖରେ ।
ନୁହେଁ ସୁଖ ଏହା ନିଶ୍ଚିତ ଦୁଃଖ
ବର୍ତ୍ତମାନ ନ ହେଲେ ବି ଭବିଷ୍ୟତେ ସୁନିଶ୍ଚିତ ।।

ବଢ଼ିଲେ ଅପରିଷ୍କାର ଅପରିଚ୍ଛନ୍ନତା
ବଢ଼ିବ ରୋଗ, ଦୁଃଖ, ଶୋକ ।
ଯେତେ ଦୁନିଆ ହେବ ଅପରିଷ୍କାର
ସେତେ ମଣିଷ ହେବ ଅମଣିଷ ।।

ଗାନ୍ଧୀ, ଗୋପବନ୍ଧୁ ମହାପୁରୁଷ
ତାଙ୍କ ସଙ୍ଗେ ପୁଣି କେତେ ଯେ ବୀର ।
ବଞ୍ଚାଇ ଦେଶକୁ ଦେଇ ଜୀବନ
କହିଛନ୍ତି ସ୍ୱଚ୍ଛ ରହିବା ପାଇଁ ।।

ସେଥିପାଇଁ ମୋଦି ଅଭିଯାନ କରି
କେତେ ଯେ ଭାଷଣ ଦେଇ ।
ଆଗେଇ ତାକୁ ନେବା ପାଇଁ
କେତେ ଯେ ବାର୍ତ୍ତା ଦେଇଛନ୍ତି ରେ ଭାଇ ।।

ତାଙ୍କ ହାତରେ ହାତ ମିଳାଇ
ଆମ ଜୀବନ ଆମେ ବଞ୍ଚାଇ ।
ସ୍ୱଚ୍ଛତା କୁ ଆମେ ଆପଣାଇ ନେଇ
ଆଗେଇ ଦେଶକୁ ନେବାରେ ଭାଇ ।।





ଅସ୍ୱଚ୍ଛତା ଯୋଗୁଁ ଗଙ୍ଗା ଅପବିତ୍ର
ଲୋକ କହୁଛନ୍ତି ବଞ୍ଚାଅ ବଞ୍ଚାଅ ।
ନିଜ ଦେଶକୁ ଆମେ ସଫା କରି ନିଜେ
ଆଗେଇ ଯିବା ସ୍ୱଚ୍ଛତା ପଥେ ।।

ସ୍ୱଚ୍ଛ ସଚେତନ ରହିଲେ ଆମେ
ଆପଣେଇ ନେଲେ ସ୍ୱଚ୍ଛତାକୁ ଆମେ ।
ରୋଗମୁକ୍ତ ଆମେରେ ରହିବା ।
ଦୁନିଆକୁ ଆମେ ବାଟ ଦେଖାଇବା ।।

କବିତା ନୁହେଁ ତ ବାର୍ତ୍ତା ମୋହରି
ଦୋଷ ତ୍ରୁଟି ଥିଲେ କ୍ଷମା କରଇ ।
କ୍ଷମା କଲେ ମୁଁ ହେବି ଉପକୃତ
ପାଶେ ସମସ୍ତଙ୍କ ହେବି ଋଣିତ ।।

ସ୍ୱଚ୍ଛ ଏ ଦେଶ ସ୍ୱଚ୍ଛଭାରତ
ହେବ ନାହିଁ କେବେ ବିପଦ,
ହେବ ନାହିଁ କେବେ ବିପଦ ।

ଶୁଭଶ୍ରୀ ରାଉତ
ଶିକ୍ଷାଶାସ୍ତ୍ରୀ ଦ୍ୱିତୀୟ ବର୍ଷ

# श्रीमद्भागवतगीतायां स्थितप्रज्ञव्यक्तित्त्वस्य स्वरूपम्

**शुभङ्कर पण्डा**
शिक्षाचार्यः (द्वितीयवर्षम्)

विषयप्रवेश –

भारतीयानां मेरूदण्डो भवति धर्म अर्थात् भारतीयानां मुख्योद्देशं भवति धर्मसाधनेन मोक्षप्राप्तिः। तद्वद् अस्माकं सनातनपरम्परायां धर्मसाधनस्य प्रमुखधर्मग्रन्थो भवति श्रीमद्भगवद्गीता । अस्मिनग्रन्थे बहूनि तत्त्वानि सम्मिलितानि सन्ति । तेषु तत्त्वेषु अन्यतम भवति स्थितप्रज्ञव्यक्तित्वविषये श्रीकृष्णद्वारा अर्जुनं प्रति ज्ञानप्रदानम् ।श्रीकृष्णः अत्र उपदेशकः अर्जुनः श्रोताश्च । ग्रन्थोयं भारतीयानां आत्मास्वरूपाः।

अर्जुनः यदा युद्धस्थले युद्धं कर्त्तुम् आसीत्, तदा तस्य मनोबलम्, आन्तरिकधैर्य पूर्णरूपेण ध्वंसं जातम् । तस्मिन् समये तस्य स्थितिः गम्भीर आसीत् एवं तस्य कृते तत्कालं कस्यापि निर्णयस्यावश्यकता अपेक्षिताऽसीत् । अर्जुनः तदा अनुभवति यानि कारणानि, मूल्यानि, मानदण्डानि च आश्रित्य युद्धं प्रति तत्परः आसीत्, ते सर्वेऽपि तस्मिन् समये अर्जुनस्य सहयोगं न कुर्वन्ति इति । ते सर्वे युद्धस्य औचित्यनिमित्तं पर्याप्तः न दृश्यन्ते, एवम् अर्जुनः स्वयम् असहायः एकाकी एवं निराशायाः परिस्थितेः सम्मुखीनं करोति ।

तस्मिन् समये अर्जुनः युद्धं कर्त्तु किमपि औचित्यमुपायं न प्राप्य युद्धात् विरामस्यावश्यकता इच्छति । अर्जुनस्य एषः भावः तदेव विशेषअस्तित्त्वपरकपरिस्थितेः उत्पन्नः भवति । यस्मात् तत्र प्रायः दार्शनिकचिन्तनानाम् आविर्भावः भवन्ति ।

यदाअर्जुनःविषादग्रस्तःआसीत्, तदा तस्य मनसि स्थितप्रज्ञस्वरूपविषये ज्ञातुं जिज्ञासायाः उत्पन्नं भवति । ग्रन्थेऽस्मिन् स्थितप्रज्ञव्यक्तेः स्वरूपविषये द्वितीयोऽध्याये सम्यग्रूपेण वर्णितमस्ति । निम्ने तस्य विवरणं सम्पूर्णरूपेण स्पष्टीकृतमस्ति –

**"स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ।।"** ( २.५४)

अर्जुनः स्थितप्रज्ञव्यक्तेः विशेषतायाः सम्बन्धे प्रश्नः पृच्छति यत्- स्थितप्रज्ञव्यक्तेः विषादग्रस्तावस्थायां कानि लक्षणानि भवन्ति ? अस्यातिरिक्तं अर्जुनः एतदपि ज्ञातुमिच्छति यत् परमतत्वे विलीनावस्थायाः भिन्नसामान्यजागतिकस्थितेः तस्य व्यक्तेः कानि लक्षणानि भवन्ति ? तस्य भाषा एवं





संलापश्च सामान्यव्यक्तेः अपेक्षया केन प्रकारेण भिन्नं भवति ? सः स्वस्य शरीरं इन्द्रियञ्च केन प्रकारेण नियन्त्रयति तथा तस्य व्यक्तेः अन्याः क्रियाः सामान्यव्यक्तयपेक्षया केन प्रकारेण विशिष्टं भवति ? उपरोक्तश्लोके प्रश्नद्वयं निहितमस्तः यथा – एकस्य सम्बन्धः स्थितप्रज्ञस्य पराजागतिकावस्थायाः साकं एवम् अन्यस्य सम्बन्धः तस्य सांसारिकावस्थायाः साकम् ।

**श्लोकस्य सन्दर्भे मधुसूदनसरस्वतीवर्यः स्वमतं ददाति यत् –**

एवं लब्धावसारः स्थितप्रज्ञलक्षणं ज्ञातुमर्जुन उवाच यान्येन हि जीवमुक्तानां लक्षणानि तान्येव मुमुक्षूणां मोक्षोपायभूतानीति मन्वानः स्थिता निश्चलाऽहं ब्रह्मास्मीति प्रज्ञा यस्य स स्थितप्रज्ञोऽवस्थाद्वयवान् समाधिस्थो व्युत्थितश्चेति । अतो विशिनष्टि समाधिस्थस्य स्थितप्रज्ञस्य का भाषा ? भाष्यतेऽनयेतिभाषा लक्षणम् । समाधिस्थः स्थितप्रज्ञः केन लक्षणेनान्यैर्व्यवह्रियत इत्यर्थः । स च व्युत्थितचितः स्थितधीः स्थितप्रज्ञः स्वयं किं प्रभाषेत स्तुतिनिन्दादावभिनन्दनद्वेषादिलक्षणं किं कथं प्रभाषेतेति सर्वत्र सम्भावनायां लिङ् । तथा किमासीत व्युत्थितचित्तनिग्रहाय कथं बहिरिन्द्रियाणां निग्रहं करोति तन्निग्रहाभावकाले च किं व्रजेत कथं विषयान्प्राप्नोति ? तत्कर्तृकभाषणासनव्रजनानि मूढजनविलक्षणानि कीदृशानीत्यर्थः ? तदेवं चत्वारः प्रश्नाः समाधिस्थे स्थितप्रज्ञे एकः व्युत्थिते स्थितप्रज्ञे त्रयः इति । केशवेति सम्बोधयन्सर्वान्तयामितया त्वमेवैतादृशं रहस्यं वक्तुं समर्थोऽस्तीति सूचयति । तदनन्तरम् अर्जुनस्य जिज्ञासायाः शान्तं कर्त्तु श्रीकृष्णः उत्तरं ददाति यत्–

**"प्रज्ञाहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ।।"** (२/५५)

यदा व्यक्तिः स्वस्य समस्तमनोकामनाः त्यागं करोते, एवं स्वयं स्वस्योपरि सन्तुष्टः भवति, तदा तं स्थितप्रज्ञः इत्युच्यते । मानवस्य मनः सामान्यतः विभिन्नप्रकाराणाम् इच्छा–प्रयोजनानाञ्च साकं प्रेरितः भवति । योगदर्शने एतादृशान् अभिप्रेरणान् ज्ञानं–भ्रमः–सम्बेगः–निद्रा एवं स्मृतिः इत्यस्मिन् च रूपे वर्णितमस्ति । यदा एते सर्वे निरस्ताः भवन्ति, तदा मनः एतेषाममुपरि उदासीनः भवति, एवं तस्मिन् समये सः स्थितप्रज्ञं प्राप्नोति । जीवनस्य विभिन्नपरिस्थित्यां स्थितप्रज्ञतायाः प्राप्तिः व्यक्तेः व्यवहारश्चानयोर्मध्ये भिन्नं भवति ।

**"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीमुर्निरुच्यते ।।"** (२/५६)

कामनायाम् उद्वेलितः सामान्यव्यक्तेः जीवनं त्रयाणां दुःखानां विषयः भवति । सः व्यक्तिः तेषां दुःखानां सम्मुखे उद्वेलितः भवति , एवं तान् दुःखान् दूरीकर्तुं अन्यसहायतायाः अन्वेषणं करोति । तस्य सम्पूर्णकष्टः-प्रचेष्टाभावः च भ्रमितबुद्धिकारणवशात् भवति । अस्यां विपरीतौ स्थिरबुद्धिसम्पन्नव्यक्तिः उपर्युक्तेभ्यः सर्वेभ्यः दुःखेभ्यः मुक्तः निवृत्तः वा भवति । सः स्थितप्रज्ञव्यक्तिः एवं शोचयति यत्, जीवनस्य दुःखः पूर्वजन्मकर्मेण साकं नियोजितः भवति परन्तु उपरोक्त दुःखत्रयाणां वशात् उत्पन्नः पीडा-कष्टः-यातना च पूर्वजन्मकर्मेण साकं नियोजिताः न भवन्ति । यदा किञ्चित् भिन्नदृष्ट्यां पश्यामश्चेत्, उपरोक्त दुःखानामुपरि आधिपत्यं स्थापयितुं शक्नुमः । एतदपि न सामान्यव्यक्तेः चेतना कर्त्तव्यबोधे पीडितः भवति, एतदर्थं व्यक्तिः स्वस्य जीवनस्योपलब्धेः साकमुत्तेजितः भुत्वा एवं शोचयति यत् सः अहोभाग्यशाली, सक्षमः, एवं सफलश्च कथं भवति ? एतादृशः भावः अपि तस्य अविवेकस्य परिणामः एव । विवेकयुक्तव्यक्तिः सर्वदा सत्यम् अवगमनं करोति, अतः ते उपरोक्त उत्तेजनायां प्रभाविताः न भवन्ति । एवं प्रकारेण सः व्यक्तिः उपरोक्त उत्तेजनायां संलग्नः भुत्वा राग-भय-क्रोधात् च सर्वदा अग्रे भवति । अस्याः कथायाः गीता एवं प्रकारेण व्यक्तीकरोतियत् –

**"यः सर्वत्रानभिस्नेहस्तत्तत्प्राय शुभाशुभम् ।**

**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ।।" (२/५७)**

स्थितप्रज्ञानाम् इन्द्रियाणि स्थितप्रज्ञव्यक्तेः क्षमतायाः आधारे भवन्ति । सः स्वस्य इन्द्रियान् सर्वस्मात् विषयात् दूरीकृत्य स्वस्य आन्तरिकस्वभावे स्थिताः भवन्ति । एकमुदाहरणत्वेन अस्याः कथायाः अवगमन् एवं प्रकारेण अस्ति यथा –

**"यदा संहरते चायं कुर्मोऽङ्गानीव सर्वशः ।**

**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ।।" (२/५८)**

येन प्रकारेण कच्छपः स्वस्य सर्वाणि अङ्गानि सर्वतः निर्लीप्तं करोति, अर्थात् सः स्वस्य अङ्गानि नियन्त्रयति, तादृशः एव स्थितप्रज्ञव्यक्तिः सर्वेभ्यः विषयेभ्यः यथा – (शब्द-स्पर्श-रूप-गन्ध) इत्यादिभ्यः विषयेभ्यः स्वस्य इन्द्रियान् दूरीकर्तुं समर्थः भवति । अर्थात् यस्य इन्द्रियाणि उपरोक्तविषयेभ्यः विमुखः भवति, तमेव स्थितप्रज्ञः इत्युच्यते । एकः अन्योदाहरणत्वेन अस्याः कथायाः स्पष्टीक्रियते यथा –

**"इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**

**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ।।" (२/६७)**





यदा मनः सर्वदा इन्द्रियाणां पृष्ठे धावति, तदा मनः व्यक्तेः बुद्धि तस्मिन् प्रकारेण एव हरणं करोति । येन प्रकारेण मरुतः जलस्योपरि प्रचलित नौकां वहयति । अस्याः कथायाः स्पष्टीकरणार्थम् एकः श्लोकमाध्यमेन स्पष्टीक्रियते यथा –

**"आपूर्यमाणमचलप्रतिष्ठं-**

**समुद्रमापः प्रविशन्ति यद्वत् ।**

**तद्वत्कामायं प्रविशन्ति सर्वे**

**स शान्तिमाप्नोति न कामकामी ।।" (२/७०)**

येनप्रकारेण समुद्रस्य चतुःपार्श्वे यदि यन्त्रमाध्यमेन जलं पूरयते, तथापि समुद्रः स्वस्य सीमायाः उल्लंघनं न करोति, तेनैव सर्वेऽपि विषयाः स्थितप्रज्ञव्यक्तिम् उद्वेलितं न कृत्वा प्रवेशः कुर्वन्ति । अन्य एकस्मिन् सन्दर्भे अस्याः कथायाः व्यक्तीकर्तुं गीता कथयति यत् –

**"विषया विनिवर्तन्ते निराहारस्य देहिनः ।**

**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ।।" (२/५९)**

येषां जनानाम् आहारं प्राप्तुं प्रचेष्टाः यदि व्यर्थ भवति, तर्हि तेषां मनसः उद्देश्यं कदापि व्यर्थ न भवति । किन्तु परंब्रह्मस्य यदा अनुभूतिः भवति, तदा विषयः एवम् इच्छा उभयतश्च मुक्तिर्भवति । मनसः विषयवासना ब्रह्मज्ञानादेव समाप्तं भवितुमर्हति । ब्रह्मस्यानुभूतेः अनन्तरम् इन्द्रियाणां दमनं करोति, तं व्यक्तिम् इन्द्रियाणां शक्तिः स्वस्योपरि आकृष्टं करोति । अतः कस्मिन्नपि समये अस्याः समस्यायाः विच्युतेः सम्भावना भवति । परन्तु यस्य व्यक्तेः मनसि विषयाणामुपरि अग्रेसरणस्य सहजप्रवृत्तिः शान्तः भवति, तस्य बुद्धिः एव पूर्णरूपेण एवं सहजरूपेण च स्थिरः मन्यते । एषा व्यक्तिः न केवलम् इन्द्रियान् विषयेभ्यः दूरीकरोति, अपि तु मनसः अपि इन्द्रियान् कोष्ठीकृतं करोति । मात्र इन्द्रियाणां माध्यमेन विषये प्रवृत्तः पर्याप्तः न । एवं तु तत्क्षणात् कर्तुं शक्यते, परन्तु संयमेऽस्मिन् सहजता तथा न बवति । मुख्यकथा भवति मनं इन्द्रियेभ्यः भिन्नकरणम् ।
गीतायामुल्लिखितमस्ति यत् –

**"कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**

**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ।।" (३/६)**

"ध्यायतो विषयान्पुंसः संगस्तेषूपजायते ।

सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ।।" (२/६२)

"क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।

स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ।।" (२/६३)

स्थितप्रज्ञस्य स्वरूपस्य सम्भवतः सर्वाधिकं महत्त्वपूर्णं प्रतिपादनं निम्नोक्त श्लोके अभिव्यक्तमस्ति यथा –

"या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।

यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ।।" (२/६९)

अत्र वयम् उपरोक्तश्लोकस्य लाक्षणिकार्थस्यावगमनं कुर्मः । अर्थात् ज्ञानीजनान् यत् वस्तुः अनावश्यकः भवति, तत्र अज्ञानीनां कृते आवश्यकं भवति । उदाहरणार्थं ज्ञानीव्यक्तिः काम्यकर्मान् तुच्छः मन्यति एवं सामान्यजनः तस्मिन्नेव निहितः भवति । ज्ञानीव्यक्तिः निष्कामतां मूल्यावानमिति मन्यति एवं सामान्यव्यक्तेः कृते तस्य किमपि मूल्यं नास्ति ।

स्थितप्रज्ञस्यावस्था जीवनस्योच्चतमावस्था भवति । अस्य अभिव्यञ्जना अस्मिन् रूपे प्रायशः सम्पूर्णदर्शने प्राप्यते, ये दर्शनमाध्यमेन एका उत्तमा जीवनशैलीं प्रसारितः कुर्वन्तः सन्ति । बौद्धग्रन्थे धम्मपदे विभिन्नाऽध्यायेऽपि स्थितप्रज्ञस्य आन्तरिकस्थितिः एवं जीवनस्योपरि अस्य प्रभावं विभिन्नप्रकारे प्रस्तुतमस्ति । यः ज्ञानी भवति, यः जीवने व्याप्तआन्तरिकनियमस्य प्रत्यक्षीकरोति, एवं यस्य जीवनम् उक्तवोधे आलोकितः अस्ति, तस्य वासनाः वसिकावृक्षस्य शुष्कपुष्पवत् सहजतया पतितं भवति । तस्य बुद्धिः स्थिरः भवति एवं तस्य व्यक्तित्त्वं सौम्यं-शान्तं-एवं स्थायी आनन्देन च दीप्तर्भवति।





# अथ सदाचारविचारः

डॉ.मदनकुमारझा

श्रुतिस्मृतिसदाचारः स्वस्य च प्रियमात्मनः ।

सम्यक्-सङ्कल्पजःकामो-धर्म-मूलमिदं स्मृतम् ।।

– *याज्ञवल्क्यस्मृतौ।।*

सदुपपदस्याङुपसर्गस्य गत्यर्थकचरधातोर्भावे घञ्प्रत्ययेन निष्पन्नं सदाचार इति पदं सुसिद्धम् । तस्य तु व्यासवाक्यं यथा –सताम् आचारः शिष्टकर्तृकपरम्परागतक्रियाद्यनुष्ठानं सदाचारः , न त्विदानींतनायातक्रियाद्यनुष्ठानं सदाचारः । स एव नियमविधिः । तन्नियमविधिप्रतिपादितक्रियाजातस्य लोककर्त्तृकाचरणव्यवहारनाम्नाभिहितं भारते । त्रेतानयोः पार्थ्यक्यम् । तथापि प्रसमीक्ष्यन्तेऽन्ये बहुविधा अर्था आचरणशब्दस्य । यथा, प्रकृतिवादाभिधाने –अनुष्ठानं व्यवहारः नियमः रीतिः । तथाच शब्दकल्पद्रुमे – आचारस्यार्थाः – यथा व्यवहारः तत्पर्य्यायः, पवित्रं, चारित्रं, वृत्तं शीलमिति हेमचन्द्रः । स्नानाचमनादिरिति मानवीयद्वितीयाध्यायोक्तोनसप्ततिश्लोकव्याख्यायां, – कुल्लूकभट्टः, यथा–

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।

आचारमग्निकार्य्यञ्च सन्ध्योपासनमेव च ।।

तद्विवरणं तु – उपनीय गुरुरिति गुरुः शिष्यं उपनीयप्रथमम् एकालिङ्गे गुदे तिस्र इत्यादि वक्ष्यमाणः शौचं स्नानाचमनाद्याचारमग्नौ सायंप्रातः समिहोमानुष्ठानं समन्त्रकसन्ध्योपासनविधिं च शिक्षयेदिति । तथा व्यवहारापरनामकस्याचारशब्दस्यान्योऽर्थो यथा व्यवहृतो व्यवहारतत्त्वे यथाह बृहस्पतिः –

आचारेण वसन्नो हि पुनर्लेखयते यदि ।

सोऽभिधेयो जितः पूर्वं प्राङ्गन्यायस्तु स उच्चयते ।।

आचारेण व्यवहारेण अवसन्नः भङ्गीं लेखयते भाषामित्यर्थः । व्यवहारस्यपरिभाषिकार्थमाह कात्यायनः –

विनानार्थेवऽसन्देहे हरण हार उच्यते ।नानासन्देहहरणं व्यवहार इति स्थितम् ।। नानाविवादविषयः संशयी ह्रियेतेऽनेन व्यवहारः भाषोत्तरक्रियानिर्णयकत्वं व्यवहारत्वं । इति । किञ्च आह पराशरस्वकृतभाष्ये-

चतुर्णामपि वर्णनामाचारो धर्मपालकः।
आचारभ्रष्टदेहानां भवेद्धर्म पराङ्मुखः।। इति ।।
आचारस्यान्वयव्यतिरेकाभ्यामैहिकामुष्मिकश्रेयोहेतुत्वम् ।

आचारलक्षणञ्चानुशासनिकपर्वणिभिहितम् –

आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचारात्-कीर्त्तिमाप्नोति पुरुषः प्रेत्य चेह च ।।
दुराचारो हि पुरुषो नेहायुर्विन्दते महत् ।
ग्रसन्ति चास्य भूतानि तथा परिभवन्ति च ।।
तस्मात्-कुयार्दिह्याचारं यदीच्छेद्भूतिमात्मनः।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ।।
साधूनाञ्च यथा वृत्तमेतदाचारलक्षणम् ।।
साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः ।
तेषामाचारणं यत्तु सदाचारः स उच्यते ।।

मनुरपि –

यस्मिन् देशे य आचारः पारम्पर्य्यासमागतः ।
वर्णनां सान्तरालानां स सदाचार उच्यते ।। इति ।।

आरण्यकपर्वणि –

अक्रुध्यन्तोऽनसूयन्तां निरहङ्कारमत्सराः ।
ऋजवः शमसम्पन्नाः शिष्टाचारा भवन्ति ते ।। इति ।।





अत्र शिष्टानामभिमतो दयादाक्षिण्यविनयाद्यन्वितो वृत्तविशेष आचार इत्युक्तं भवति । स आचारः श्रौतं स्मार्त्त च धर्म पालयति ।धर्मविघातिनां नैर्घृणयक्रोधादीनां अभावात् । असति त्वाचारे विरोधिसद्भावात् धर्म एव न प्रवर्त्तते , कथञ्चित् प्रवृतोऽपि परावर्त्तते, सोऽयं धर्मपालक आचारश्चतुर्णामवर्णानां साधारणः । ननु किञ्चित् साधारण वद इति न सङ्गच्छते । इति चेन्न । निमित्तनैमित्तिकयोः आचारधर्मयोरभेदस्य विवक्षितत्वात् । किञ्च भारतीयाचार्य्याणां तदात्मकसदाचारस्य शास्त्राभिप्रेतत्वे प्रमाणानि समुपस्थाप्यन्ते अधस्तात् संक्षेपतः । तद्यथा वामनपुराणचतुर्दशाध्याये राक्षसं प्रति ऋषिवर्चनम्।

ऋषय उचुः –

सदाचारो निगदितस्तव योऽस्माभिरादरात् ।
लक्षणः तस्य वक्ष्यामस्तच्छृणष्व निशाचर ।।
गृहस्थेन सदा कार्य्यामाचारपरिपालनम् ।
न ह्याचारविहीनस्य भद्रमत्र परत्र च ।।
यज्ञदानतपांसीह पुरुषस्य न भूतये ।
भवन्ति यः समुल्लङ्घ्य सदाचारं प्रवर्तते।।
दुराचारो हि पुरुषो नेह नामुत्र नन्दति ।
कार्यो यत्र सदाचारे आचारो हन्त्यलक्षणम् ।।
तस्य स्वरुपं वक्ष्यामः सदाचारस्य राक्षस ।
श्रृणष्वैकमनास्त्वञ्च यदि श्रेयो हि वाञ्छसि ।।
धर्मोऽस्य मूलं धनमस्य शाखाः पुष्पाणि कामः फलमस्य मोक्षः ।
असौ सदाचारतरुः सुकेशिन् संसेवितो येन स पुण्यभोक्ता ।।

नित्यकर्मपद्धतौ प्रातः स्मरणम्–

प्रभाते यः स्मरेन्नित्यं दुर्गा दुर्गाक्षरद्वयम् ।
आपदस्तस्य नश्यन्ति तमः सूर्योदये यथा ।।
हरं हरिं हरिश्चन्द्रं हनूमन्तं हुताशनम् ।
हकारादीन् स्मरेन्नित्यं हानिस्तस्य न विद्यते ।।

उत्कर्षविशेषस्तु नवधा तद्यथा–

आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् ।
निष्ठा वृत्तिस्तपोदानं नवधा कुललक्षणमिति ।।

जागरूकं शास्त्रीयप्रमाणम् । अत एवोत्कर्षविशेषात्मकनवधागुणविशिष्टत्वं कुलीनत्वमिति निर्गलितार्थः। अनया रीत्या संस्कृतवाङ्गमये सदाचारविषये वर्णितं वर्तते ।

*सन्दर्भग्रन्थसूची –*

कल्यापद्धर्मसर्वस्वम् –श्रीसदाशिवमिश्रः
मनुस्मृतिः– कुल्लूकभट्टः
महाभारतम् –गीताप्रेसगोरखपुरम्
याज्ञवल्क्यस्मृतिः–
वामनपुराणम् – गीताप्रेसगोरखपुरम्
शब्दकल्पद्रूमः –राजाराधाकान्तदेवः
हेमचन्द्रः –अनेकार्थसंग्रहः